# वैशेषिकदर्शनम्।

## कणादमहर्षि-प्रणीतम्।

राजकीयसंस्कृतविद्यालयाध्यापक-

महामहोपाध्याय-

श्रीचन्द्रकान्त-तर्कालङ्कार-कृत-भाष्य-समेतम्।

सेरपुरनिवासि-

श्रीराधावल्लभ-चतुर्धुरिणा

प्रकाशितम्।

कलिकाताराजधान्याम्

वाप्तिस्तमिशनयन्त्रे मुद्रितम्। शकाब्दाः १८०९॥

THE

# VAISE'SHIKA-DARSANAM

WITH THE COMMENTARIES

OF

MAHAMAHOPADHYAYA CHANDRAKANT TARKALANKAR

PROFESSOR GOVT. SANSKRIT COLLEGE.

PUBLISHED BY

RADHAVALLABH CHAUDHURI

OF SHEREPUR.




CALCUTTA.

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

1887.

Mukerji

# भूमिका।

वैशेषिकदर्शनमिदं कणादमहर्षिप्रणीतम्। सचायं महर्षिः कश्यपस्य गोत्रापत्यं "विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्"—इत्यादौ काश्यपतयाऽस्योल्लेखात्। अपिचायं उलूकइति वा औलूक्यइति वा आख्यायते। सर्व्वदर्शनसंग्रहादावौलूक्यदर्शनतया वैशेषिकदर्शनस्योल्लेखात्। स चायं धान्यानामेकैककणिकोच्चयनरूपेणोञ्छेन वर्त्तनात् कणादनाम्ना प्रसिद्ध।

सोऽयं मुनिः अतिप्राचीनइति शक्यमवगन्तुम्। महाभारते तावत् उलूकनाम्नोमुनेरुल्लेखोदृश्यते भीष्मस्तवराजे। "न वयं षट्पदार्थवादिनो-वैशेषिकादिवत्" इति साङ्ख्यसूत्रात् साङ्ख्यदर्शनात् प्राचीनत्वमस्य ग्रन्थस्य तावदवगम्यते। एवं "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां" इत्यादि ब्रह्मसूत्रपर्य्यालोचनया व्याससूत्राणामपि पूर्व्वं एतद्दर्शनं प्रणीतमिति शक्यमवगन्तुम्। अपि च अस्मिन् दर्शने न्याये च शब्दानां उत्पत्तिविनाशवत्त्वं सिद्धान्तितम्। स चायं सिद्धान्तः "कर्म्मैके तत्र दर्शनात्" इत्यादिसूत्रै-रुद्धृत्य महता यत्नेन निराकृतोजैमिनिना अध्वरमीमांसायाम्। अत-स्तस्मादपि दर्शनात् अस्य दर्शनस्य प्राचीनत्वमवगम्यते। रावणेनास्य दर्शनस्योपरि भाष्यं रचितमिति रत्नप्रभादौ दर्शितम्।

न्यायवैशेषिकयोस्तु समानतन्त्रयोः वैशेषिकस्यैव प्राचीनत्वं सम्भाव्यते। यतः, अस्मिन् दर्शने अनुमानप्रणाली संक्षेपेणैव उपवर्णिता। न्याये तु महता प्रबन्धेन विस्तरेण सोपदिष्टा। समीचिना च सा तत्रोपलभ्यते। अपि चात्र "अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः" इत्यादिना त्रयएव हेत्वा-भासाउपदिष्टाः, न्याये तु पञ्च हेत्वाभासाः सप्रपञ्चं सोपपत्तिकञ्चोप-

मुपदिष्टम् । अत्र प्रायेण पदार्थतत्त्वमालोचितम् । तत्र, द्रव्यगुणकर्म्मसामान्य-विशेषसमवायाख्याः षट्पदार्थाः सूत्रकृतोद्दिष्टाः । एष्वेव सर्व्वेषां पदार्थान अन्तर्भावः । प्रशस्तपादादीनां वैशेषिकाचार्य्याणां मते एते षट् पदार्थाभावा-भिप्रायेणोक्ताः । अभावोऽपि सप्तमोमुनेरभिप्रेतः । तेन सप्तैव पदार्था भवन्ति

तत्र क्रियागुणाश्रयः समवायिकारणं द्रव्यम् । तच्च नवविधं, पृथिवी जल तेजः वायुः आकाशः कालः दिक् आत्मा मनः—इति भेदात् । तत्र, गन्ध-समवायिकारणं द्रव्यं पृथिवी । पृथिव्यामेव गन्धः, जलादौ गन्धोपलब्धिः पार्थिवांशौपाधिकी । शुक्लरूपवत् द्रव्यं जलम् । शुक्लमेव रूपं जलस्य । कालिन्दीजलादौ नैल्योपलब्धिराश्रयौपाधिकी । तस्यैव जलस्य वियति विक्षेपे धावल्योपलब्धेः । एवं मधुरएव रसोजलस्य । जम्बीररसादावम्ला-द्युपलब्धिराश्रयौपाधिकी । उष्णस्पर्शवत् द्रव्यं तेजः । चन्द्रकिरणादौ जलादिस्पर्शेनाभिभवात्तदग्रहः । अनुष्णाशीत-विलक्षण-स्पर्शवान् वायुः । शब्दसमवायिकारणमाकाशम् । वायुविशेषगुणोहि स्पर्शोयावद्द्रव्यं भवति, शब्दस्तु न यावत् द्रव्यं भवतीति नासौ वायुविशेषगुणः । अतस्तदाश्रयतया आकाशोऽङ्गीकार्य्यः । ज्येष्ठत्वकनिष्ठत्वादिबुद्धिहेतुः कालः । दूरत्वान्तिक-त्वादिबुद्धिहेतुर्दिक् । सोऽयमेकएव पदार्थः कार्य्यभेदाद्भेदेन व्यपदिश्यते आकाशः कालोदिगिति । प्राञ्चस्तु भेदमेवामीषामाहुः ।

चैतन्याश्रयआत्मा । शरीरस्य तु न चैतन्यं, शरीरकारणेषु परमाणुषु चैतन्ये मानाभावात् । पार्थिवगुणानां कारणगुणपूर्व्वकत्वाच्च । क्वचित् कार्य्ये शरीरादौ ज्ञानमुपलभ्यते, क्वचिच्च नोपलभ्यते घटादौ । अतोविशेष-हेतुरत्र वाच्यः । शरीरगुणोहि रूपादिः शरीरविशेषाद्विशिष्यते शरीर-ग्रहणे च गृह्यते, न त्विदं ज्ञानं, तस्मान्न शरीरस्य चैतन्यम् । एतेनेन्द्रिय चैतन्यं प्रत्युक्तम् । मनोपि नात्मा । आत्मनः सुखादिप्रत्यक्षकरणं हि तत् । न हि करणमेव कर्त्ता । यथा हि रूपाद्युपलब्धिः सकरणिका इति तत्का-रणं चक्षुरादिकं, एवं सुखाद्युपलब्धिरपि सकरणिकेति तत्करणं मनः । अतस्तदतिरिक्तएवात्मा । न्याये तस्मादपि समीचीनतया शरीरेन्द्रियचैतन्यं

निराकृतम् । प्राणापाननिमेषोन्मेषसुखदुःखादिभिः, अभिमतविषये मनसः प्रेरणेन च, देहादिव्यतिरिक्तात्मानुमानम् । संसारदशायामुपाधिभेदादात्मनो भेदः सुखदुःखादिव्यवस्था च । परमार्थतस्त्वेकएवात्मा । तथा चैकस्मिन् प्रदेशे कालभेदेनैकस्मिन् काले देशभेदेनापि कायव्यूहादिवद्विरुद्धधर्माध्यासेनासङ्कतः । सोऽयमात्मा अनादिमिथ्याज्ञानवासनया शरीरादिकमेवात्मानं मन्यमानस्तदनुकूले रज्यति द्वेष्टि च प्रतिकूलं, रज्यन् प्रवर्त्तते, प्रवर्त्तमानः शुभाशुभानि कर्म्माणि सञ्चिनोति, ततो जायते, ततो दुःखमनुभवति । पृथिव्यादिभिन्नत्वेनात्मानं यदा तत्त्वतोजानाति, तदा श्रवणमनननिदिध्यासनैर्दृढभूमिं गतया तत्त्वज्ञानवासनया मिथ्याज्ञानवासनोपमृद्यते । तदेवं तत्त्वज्ञानेन मिथ्याज्ञानापाये कारणाभावात् रागद्वेषावपयतः । एवं तदपायात् प्रवृत्तिरपैति । प्रवृत्त्यपाये जन्मापैति । जन्मापाये दुःखमपैति । सोऽयं मोक्षः । तदेतत् परमं निर्व्वाणम् । तत्र तत्त्वज्ञानोपदेशार्थं मननार्थञ्च शास्त्रस्यारम्भः ।

सुखाद्युपलब्धिसाधनं ज्ञानायौगपद्यनियामकञ्च मनः । युगपदनेकेन्द्रियैरनेकविषयसन्निकर्षे सत्यपि यत्सन्निधिवशादेकेन्द्रियेण ज्ञानं जन्यते यत्सन्निधेरभावाच्चापरैरिन्द्रियैर्ज्ञानं न जन्यते, तन्मनः ज्ञानायौगपद्यनियामकम् । तथा च तत्तदिन्द्रियेण ज्ञानजनने मनसा समं तत्संयोगोऽपि हेतुः । मनस्त्वणुपरिमाणतया न युगपदनेकैरिन्द्रियैः संबध्यते इति न ज्ञानयौगपद्यम् । मनसश्चाशुसञ्चारात् उत्पलशतपत्रव्यतिभेदवत् दीर्घशष्कुलीभक्षणादौ सतोऽपि क्रमस्याग्रहणात् ज्ञानयौगपद्याभिमानइति ।

अन्धकारस्तु न द्रव्यं, किन्तु तेजोऽभावः । तस्य नैल्योपलब्धिराश्रयौपाधिकी । गत्युपलब्धिस्त्वालोकापसारणौपाधिकी ॥

पृथिव्यप्तेजोवायुरूपाणि द्रव्याणि द्विविधानि, नित्यानित्यभेदात् । परमाणुरूपाणि नित्यानि, तदन्यान्यनित्यानि । तत्रानित्योऽपि वायुरवान्तरसर्गप्रलयेष्ववस्थानान्नित्यइत्युच्यते । सर्व्वाणि कार्य्यद्रव्याणि सावयवानि तेषामवयवेषु विभज्यमानेषु यतः परं न विभागः सम्भवति, सोऽयं

विभागप्रकर्षपर्य्यन्तोनिरवयवः परमाणुरिति। कारणगुणपूर्व्वकत्वात् कार्य्य
गुणस्य कार्य्येषु रूपादिदर्शनात् तत्कारणेषु परमाणुष्वपि रूपादिव
मनुमीयते। तत्र पार्थिवपरमाणुषु अग्निसंयोगादपि रूपान्तरोत्पत्तिर्भवति
कार्य्यद्रव्ये तथा दर्शनात्, तस्य च कारणगुणपूर्व्वकत्वादित्युक्तम्।

पृथिव्यादीनि कार्य्यद्रव्याणि त्रिविधानि, शरीरेन्द्रियविषयभेदात्
शरीरं द्विविधं योनिजमयोनिजञ्च। नियतोत्पत्तिस्थानं योनिः, तस्याजात
योनिजम्। तच्चतुर्विधं जरायुजाण्डजस्वेदजोद्भिज्जभेदात्। जरायुजं मनुष्या
दीनाम्। अण्डजं पक्ष्यादीनाम्। स्वेदजं मशकादीनाम्। उद्भिज्जं तर्व्वादी
नाम्। अयोनिजन्तु मरीच्यादीनाम्। प्राञ्चन्तु स्वेदजादिकमयोनिजमित्याहुः
मनुष्यादिशरीरेष्ववादीनामुपष्टम्भकत्वेऽपि पार्थिवमेव तत्, तद्विशेषगुणस
गन्धस्याव्यभिचारेणोपलब्धेः। एवं जलीयादिशरीराणि वरुणलोकादि
ज्ञेयानि। इन्द्रियाणि स्वप्रकृतिभूतविशेषगुणग्राहकाणि। तथा च, घ्राणेन्द्रि
पार्थिवं गन्धग्राहकत्वात्। रसनं जलीयं रसग्राहकत्वात्। चक्षुस्तैजसं रूप
ग्राहकत्वात्। त्वगिन्द्रियं वायवीयं स्पर्शग्राहकत्वात्। (कर्णशष्कुल्यवच्छिन्
नभः श्रोत्रम्।) शरीरेन्द्रियभिन्नं कार्य्यद्रव्यं विषयः। द्व्यणुकादिब्रह्माण्डान्तो
विषयः। हिमकरकादयोऽप्यत्रैव निविशन्ते। हिमादयोऽप्यपां संघात
एव। तेजःसंयोगाच्च तेषां विलयनम्।

द्रव्याश्रयी अगुणवान् कर्म्मभिन्नोगुणः। स चानेकप्रकारः, रूप-रस-गन्ध
स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्व-अपरत्व-बुद्धि-सुख-दु
ःख-इच्छा-द्वेष-यत्न-गुरुत्व-लघुत्व-द्रवत्व-स्नेह-संस्कार-धर्म्म-अधर्म्म-शब्दादि
भेदात्। चक्षुर्ग्राह्योगुणः रूपम्। तदपि शुक्लादिभेदादनेकविधम्। रसनग
ग्राह्योगुणोरसः। सोऽपि मधुरादिभेदादनेकविधः। घ्राणग्राह्योगुणो
गन्धः। स च सुरभिरसुरभिश्चेति द्विविधः। त्वचा ग्राह्योगुणः स्पर्शः
स च कठिनसुकुमारादिभेदादनेकविधः। एते रूपरसगन्धस्पर्शाः पार्थिव
परमाणुषु पाकजाअपि भवन्ति। गणनव्यवहारहेतुर्गुणः संख्या। स
चैकत्वादिभेदादनेकविधा।

मानव्यवहारहेतुर्गुणः परिमाणम्। तदप्यनेकविधं, अणुमहदादि-भेदात्। परमाणुगतमणुत्वं आकाशादिगतं महत्त्वञ्च नित्यं, तद्भिन्नमनित्यम्। द्व्यणुकगताणुपरिमाणं प्रति तत्कारणपरमाणुद्वित्वं हेतुः। कारण-बहुत्वात् कारणमहत्त्वात् प्रचयाच्च महत्त्वस्योत्पत्तिः। त्रिभिर्द्व्यणुकैरेकस्त्र-सरेणुरुत्पद्यते। तत्र यन्महत्त्वं, तत् त्रसरेणुकारणानां द्व्यणुकानां बहुत्वा-दुत्पद्यते। द्व्यणुकपरिमाणन्तु तत्र न हेतुः, तस्याकारणत्वात्। अन्यथा, परिमाणानां सजातीयोत्कृष्टपरिमाणजनकतया महज्जातस्य महत्तरत्व-वदणुजातस्याणुतरत्वप्रसङ्गात्। घटादिमहत्परिमाणं प्रति कपालादिमह-त्परिमाणं हेतुः। द्वाभ्यां प्रचिताभ्यां तूलपिण्डाभ्यामारब्धे तूलपिण्डान्तरे यः परिमाणोत्कर्षः, तूलपिण्डयोः प्रचयस्तत्र हेतुः। प्रचयश्च शिथिलाख्यः संयोगविशेषः, स च स्वाभिमुखं किञ्चिदङ्गसंयोगलक्षणः।

पृथक्त्वमसंयोगोवैलक्षण्यमनेकता च। संयोगस्तु अप्राप्तयोः प्राप्तिः। स च त्रिविधः, अन्यतरकर्म्मजन्यउभयकर्म्मजन्यः संयोगजन्यश्चेति। तत्र, श्येनशैलसंयोगः प्रथमः, तस्य श्येनक्रिययैव जननात्। मेषयोर्मल्लयोर्व्वा परस्परं संयोगः उभयकर्म्मजन्यः। तृतीयस्तु कपालतरुसंयोगात् तरुकुम्भ संयोगइति। संयोगप्रतिद्वन्दी विभागोऽपि पूर्व्ववत् त्रिविधोवोद्धव्यः। परत्वमपरत्वञ्च द्विविधं, दैशिककालिकभेदात्। तत्र, दैशिकपरत्वापरत्वे दूरत्वान्तिकत्वरूपे। कालिकपरत्वापरत्वे ज्येष्ठत्वकनिष्ठत्वरूपे।

बुद्धिर्द्विविधा, संशयनिश्चयभेदात्। अनवधारणात्मकं ज्ञानं संशयः। स च साधारणधर्म्मदर्शनादिभ्योजायते। यथा स्थाणुपुरुषयोः साधारणधर्म्म-मारोहपरिणाहौ पश्यन् विशेषञ्चाजानानः संशेते स्थाणुर्व्वा पुरुषोवेति। अवधारणात्मकं ज्ञानं निश्चयः। पुनरपि बुद्धिर्द्विविधा, अप्रमाप्रमाभेदात्। प्रमाभिन्ना बुद्धिरप्रमा। साऽपि द्विविधा, संशयविपर्य्ययभेदात्। संशयः पूर्व्वमुक्तः। विपर्य्ययोमिथ्याज्ञानमवधारणात्मकं पीतः शङ्खइत्यादिरूपम्। यथार्थोऽनुभवः प्रमा। साऽपि द्विविधा, प्रत्यक्षानुमितिभेदात्। इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। तच्चानेकविधं, चक्षुरादीन्द्रियभेदात्। व्याप्तिज्ञानजन्यं ज्ञान-

मनुमितिः। अनयोरेव उपमित्यादीनां यथायथमन्तर्भावः। अनुभवस्मरणभेदेनापि बुद्धिर्द्विविधा। तत्रानुभव उक्त एव। स्मृतिस्तु संस्कारजन्यं ज्ञानम्।

सुखदुःखे प्रत्यात्ममनुभवसिद्धौ गुणौ। तथेच्छाद्वेषौ। इच्छा प्रवृत्तिं प्रति, द्वेषश्च निवृत्तिं प्रति हेतुः। यत्नस्त्रिविधः प्रवृत्तिनिवृत्तिजीवनयोनिभेदात्। श्वासप्रश्वासहेतुर्यत्नो जीवनयोनिः। गुरुत्वलघुत्वे परस्परप्रत्यनीकभावापन्नौ गुणौ। द्रवत्वं स्यन्दनहेतुर्गुणः। गुणिद्रव्यापिण्डीकरणहेतुर्गुणविशेषः स्नेहः। संस्कारस्त्रिविधः, वेगभावनास्थितिस्थापकभेदात्। निक्षिप्तशरादौ नोदनविशेषाद्वेगो जन्यते, ततोत्तराणि कर्म्माण्युत्पद्यन्ते। न त्वेकमेवेषोः कर्म्मापतनात् शक्यं वक्तुं, उत्तरसंयोगेन कर्म्मनाशावश्यकत्वात्। स्मृतिहेतुः संस्कारः, भावनाख्यः। आकृष्टवृक्षशाखादीनां परित्यागे पूर्व्ववदवस्थानहेतुः संस्कारः स्थितिस्थापकः। धर्म्माधर्म्मौ पुण्यपापे। श्रवणेन्द्रियग्राह्योगुणः शब्दः। स च द्विविधः, ध्वनिवर्णभेदात्। मृदङ्गादिभवोध्वनिः, कण्ठताल्वाद्यभिघातजन्योवर्णः। योग्यत्वादेवमेषां विभागः। शक्तिः प्रतिभावमनुगतोधर्म्मः।

द्रव्याश्रयी अगुणवान् संयोगविभागेष्वनपेक्षकारणं कर्म्म। तच्च पञ्चविधं, उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदात्। उर्द्धसंयोगफलकं कर्म्मोत्क्षेपणम्। अधःसंयोगफलकं कर्म्मावक्षेपणम्। आरम्भकसंयोगे सत्येवावयवानां परस्परमनारम्भकसंयोगविशेषजनकं कर्म्माकुञ्चनम्। आकुञ्चितानामवयवानां विभागविशेषजनकं कर्म्म प्रसारणम्। एतच्चतुष्टयभिन्नं कर्म्म गमनम्। अत्रैव भ्रमणरेचनादीनां नमनोन्नमनादीनाञ्चान्तर्भावः।

सामान्यं साधर्म्यमनुवृत्तिहेतुः पदार्थः। व्यावृत्तिहेतुर्व्विशेषः। तत्र, द्रव्यादित्रिकवृत्ति भावाख्यमन्यं सामान्यमनुवृत्तेरेव हेतुत्वात् सामान्यमेव। एकव्यक्तिमात्रवृत्तयः परमाणूनां आकाशादीनाञ्च परस्परं व्यावृत्तिहेतवोऽन्त्याविशेषाव्यावृत्तेरेव हेतुत्वात् विशेषाएव। द्रव्यत्वादिकन्तु क्षितित्वाद्यपेक्षयाऽनुवृत्तिहेतुत्वात् सामान्यं, भावापेक्षया व्यावृत्तिहेतुत्वाद्विशे-

यश्च भवति। तावेतौ सामान्यविशेषौ यथायथं द्रव्यादिष्वन्तर्भवतः। अथवा, एकएवभावस्तेन तेन रूपेण विशिष्यते। द्रव्याणां भावोद्रव्यत्वं गुणानां भावोगुणत्वं कर्म्मणां भावः कर्म्मत्वमित्यनुवर्त्तमानएव भावो व्यावर्त्तमानैर्द्रव्यादिभिर्व्विशिष्यते। सोऽयं गुणः, द्रव्यं खल्वयमाश्रयति नापि गुणवान् कर्म्मभिन्नश्चायमिति।

अयुतसिद्धानां कार्य्यकारणादीनामिहेति प्रत्ययहेतुः संबन्धः समवायः। असंबद्धयोर्व्विद्यमानत्वं युतसिद्धिः। सोऽयमयुतसिद्धानामुपश्लेषः समवायो युतसिद्धानान्तु संयोगइति पूर्व्वोक्तरीत्या गुणएव।

अभावश्चतुर्व्विधः, प्रागभावोध्वंसोऽत्यन्ताभावोऽन्योन्याभावश्चेति। पदार्थस्योत्पत्तेः पूर्व्वं योऽभावः, स प्रागभावः। उत्पन्नस्य विनाशात् परं योऽभावः स ध्वंसः। यत्त्वेकत्र सतोऽन्यत्राभावः, सोऽत्यन्ताभावः। एकभावस्यान्यभावात्मना योऽभावो घटः पटो न भवतीत्यादिरूपः, सोऽयमन्योन्याभावः। तत्राद्यत्रयस्यायोगरूपे पृथक्त्वे, अन्त्यस्य च वैलक्षण्यरूपे तस्मिन्नन्तर्भावः।

गुणलक्षणस्य सामान्यादिसाधारण्यात्, "अर्थइति द्रव्यगुणकर्म्मसु"— इति सूत्रेण द्रव्यगुणकर्म्मभ्योऽन्यस्यार्थस्यानङ्गीकारावगतेः, द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानामित्युद्देशसूत्रेऽभावस्याकीर्त्तनाच्च, द्रव्यगुणकर्म्मस्वेव सामान्यादीनामन्तर्भावः,—इति व्यक्तमाचार्य्यस्याभिप्रायोऽवगम्यते। न च द्रव्यगुणकर्म्मणामर्थत्वं परिभाषामात्रमिति मन्तव्यं, तत्परिभाषायाः कुत्राप्युपयोगादर्शनात्। तदिदं द्रव्याद्यन्तर्भूतानां सामान्यादीनां पृथग्वचनं प्रस्थानभेदार्थम्। यथा न्याये प्रमाणप्रमेययोरन्तर्भूतानां संशयादीनां पृथग्वचनं प्रस्थानभेदार्थं, तद्वदत्रापि। एवमाकाशपरीक्षायां, शब्दाश्रयत्वेनाकाशं सिषाधयिषोः पृथिव्यप्तेजोवाय्वात्ममनसां शब्दाश्रयत्वं निराकृत्य "परिशेषाल्लिङ्गमाकाशस्य" इति सूत्रयतोमहर्षेः कालदिशोराकाशानतिरिक्तत्वे अभिप्रायोलक्ष्यते। इतरथा, अवश्यं तयोरपि शब्दाश्रयत्वं निराकरिष्यत्। तयोः पदार्थान्तरत्वे पृथिव्यादिवत्तयोः शब्दा-

अयत्नानिराकरणमकृत्वा पारिशेष्यादाकाशसाधनानुपपत्तेः। सोऽयं पूर्व्व-वत् प्रस्थानभेदः।

प्रमायाः करणं प्रमाणम्। तच्च द्विविधं, प्रत्यक्षमनुमानञ्च। इन्द्रि-यसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं, तच्च षड्विधं, चाक्षुष-रासन-घ्राण-त्वाच-श्रावण-मानस-भेदात्। रूपादीनां चाक्षुषादिकं पूर्व्वमुक्तम्। मानसन्तु सुखादीनां भवति। द्रव्यप्रत्यक्षे संस्कृतरूपं महत्त्वमनेकद्रव्यवत्त्वं च कारणम्। तथाविधद्रव्ये वर्त्तमानानां रूपादीनामपि प्रत्यक्षं, न तु परमाण्वादिवृत्तीनाम्। क्षित्यप्तेजांसि प्रत्यक्षाणिद्रव्याणि। अनुमेयान्य-न्यानि। रूपसंस्काराभावाद्वायोः, रूपाभावाच्चाकाशादीनां न प्रत्यक्षम्। "रूपसंस्काराभावाद्वायोरनुपलब्धिः"—इति सूत्राद्वायोरपि रूपमस्ति, संस्कारः परं नास्तीत्याचार्य्यस्याभिप्रायोलक्ष्यते। अन्यथा रूपाभावादिति कुर्य्यात्। एवमात्माऽपि न प्रत्यक्षः। नीरूपत्वात्, अनेकद्रव्यवत्त्वाभावाच्च। द्रव्यप्रत्यक्षे च तयोर्हेतुत्वात्। न च वहिर्द्रव्यप्रत्यक्षे तयोर्हेतुत्वं, माना-भावात्। अतएव "महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः"—इति सामा-न्यतः सूत्रणमाचार्य्यस्य। "दृष्टयात्मनि लिङ्गे एकएव दृढ़त्वात् प्रत्यक्ष-वत् प्रत्ययः"—इति सूत्रेणात्मनि प्रत्यक्षवत् एकएव प्रत्ययउक्तः, न तु प्रत्यक्षमनुमानञ्चेति द्वौ प्रत्ययौ। "तत्रात्मा मनश्चाप्रत्यक्षे"—इति सूत्रे व्यक्तमात्मनोऽप्रत्यक्षत्वमुक्तम्। अहं जानामीति प्रत्ययोऽप्यहं गौरइतिव-देहाद्यालम्बनएव। कयाचिद्विवक्षया ज्ञानमपि तत्रैवोपनीयते। स्थूलोऽहं जानामीत्याद्यनुभवस्यान्यथानुपपत्तेः।

केनचिल्लिङ्गेन कस्य चिदनुमानं लैङ्गिकं, तच्च व्याप्तिज्ञानजन्यं ज्ञानं (व्याप्तिश्च लिङ्गलिङ्गिनोर्नियतः संबन्धः।) तच्च लैङ्गिकं द्विविधं, दृष्टलिङ्ग-मदृष्टलिङ्गञ्च। लिङ्गलिङ्गिनोः संबन्धोयत्र प्रत्यक्षेण गृह्यते, तद्दृष्टलिङ्गं, विपरीतमदृष्टलिङ्गम्। प्रकारान्तरेण लैङ्गिकं त्रिविधं, पूर्व्ववत् शेषवत् सामान्यतोदृष्टञ्च। यत्र कारणेन कार्य्यमनुमीयते, तत् पूर्व्ववत्। यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम्। यत्र कार्य्येण कारणमनुमीयते, तत्

शेषवत्। यथा धूमेन वह्न्यनुमानम्। एतत्द्विविधभिन्नमनुमानं सामान्यतोदृष्टं, यत्र सामान्यतोलिङ्गलिङ्गिनोः संबन्धदर्शनादनुमानं प्रवर्त्तते। यथा छिदादिक्रियायां कुठारादिकरणकत्वदर्शनात् ज्ञानक्रियायामपि करणानुमानम्। पुनश्चानुमानं त्रिविधं, केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि च। असद्विपक्षं केवलान्वयि। (निश्चितसाध्याभाववान् विपक्षः)। असत्सपक्षं केवलव्यतिरेकि। (सपक्षोनिश्चित साध्यवान्।) विद्यमानसपक्षविपक्षं अन्वयव्यतिरेकि। भूयोऽप्यनुमानं द्विविधं, स्वार्थं परार्थञ्च। तत्र परार्थं न्यायसाध्यम्। न्यायश्च पञ्चावयवोपेतवाक्यविशेषः। अवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि। पर्व्वतो वह्निमान् इति प्रतिज्ञा। धूमादिति हेतुः। योयोधूमवान् स वह्निमान् यथा महानसं इति उदाहरणम्। वह्निव्याप्यधूमवानयमिति उपनयः। तस्मादयं वह्निमानिति निगमनम्। एतच्च साधर्म्योक्तौ हेतौ। वैधर्म्योक्तौ त्वल्वपि। वह्निमान्। धूमात्। योन वह्निमान् नासौ धूमवान्, यथा ह्रदः। नचायं तथा। तस्मादयं वह्निमान्।

हेतोराभासाः इति हेत्वाभासाः हेतुदोषा भण्यन्ते। हेतुवदाभासन्ते इति दुष्टहेतवश्च तथोच्यन्ते। त्रयएव हेत्वाभासाः सूत्रकारेणोक्ताः, अप्रसिद्धोऽसन् सन्दिग्धश्च। अप्रसिद्धोऽगृहीतव्याप्तिकोविपरीतव्याप्तिकश्च। यत्रानुमीयते सोऽयं पक्षः, तत्राविद्यमानोऽसन्। यस्माद्विषाणी तस्मादश्वः इत्यत्राप्रसिद्धोहेतुः। रासभपिण्डे पक्षीकृते चायमेवासन्। सन्दिग्धोऽनैकान्तिकः। साध्यमप्येकोऽन्तस्तदभावोऽप्येकोऽन्तः, एकस्मिन्नन्ते वर्त्तते इत्यैकान्तिकः, विपर्य्ययादनैकान्तिकः योद्वयोरप्यन्तयोर्व्वर्त्तते इति। यस्माद्विषाणी तस्माद्गौरित्यनैकान्तिकस्योदाहरणम्। न्यायोक्तयोः वाधसत्प्रतिपक्षयोरप्यनैकान्तिकादावेवान्तर्भावः।

शब्दोन प्रमाणान्तरं, प्रत्यक्षलैङ्गिकपूर्व्वकत्वात्। स्वयं हि ज्ञातमर्थं परान् प्रतिपादयितुकामेन शब्दः प्रयुज्यते। सोऽयं संज्ञादिवत् तदेव ज्ञापयतीति न प्रमाणान्तरम्। उपमानमपि यथायथं प्रत्यक्षलैङ्गिकयोरन्त-

भवति। तथाहि, दृश्यमानगवये गोसादृश्यज्ञानं तावत् प्रत्यक्षमेव। स्मर्य्यमाणायां गवि गवयसादृश्यज्ञानमपि प्रत्यक्षमनुमानं वा। यदपि गोसदृशोगवयइत्यारण्यकवाक्यं श्रुतवतोग्रामीणस्यारण्यं गतस्य गवयपिण्ड-दर्शने तत्र गवयशब्दस्य सङ्केतग्रहः, तदप्यनुमानमेव। अर्थापत्तिरप्यनु-मानेऽन्तर्भवति। तथाहि, जीविनोदेवदत्तस्य गृहाभावेन वहिर्भावकल्पन-मनुमानमेव। पीनोदेवदत्तोदिवा न भुङ्क्ते इत्यत्र दिवाऽभुञ्जानस्य पीनत्वेन रात्रिभोजनकल्पनमप्यनुमानमेवेति संक्षेपः। धीमद्भिरन्यदवधेयमिति शिवम्।

| | |
|---|---|
| कलिकातामहानगर्य्यां<br>राजकीयसंस्कृतविद्यालयात्।<br>१८०९ शकवर्षे भाद्रपदे। | सहरसेरपुरवास्तव्यः<br>श्रीचन्द्रकान्तशर्म्मा। |

# वैशेषिकदर्शनस्य

## सूचीपत्रम् ।

### प्रथमाध्याये प्रथमाह्निके ।



### द्वितीयाह्निके ।

## द्वितीयाध्याये प्रथमाह्निके।



## द्वितीयाध्याये द्वितीयाह्निके।



## तृतीयाध्याये प्रथमाह्निके।

## तृतीयाध्याये द्वितीयाह्निके ।



## चतुर्थाध्याये प्रथमाह्निके ।



## चतुर्थाध्याये द्वितीयाह्निके ।



## पञ्चमाध्याये प्रथमाह्निके ।

## पञ्चमाध्याये द्वितीयाह्निके।



## षष्ठाध्याये प्रथमाह्निके।



## षष्ठाध्याये द्वितीयाह्निके।

## सप्तमाध्याये प्रथमाह्निके ।



## सप्तमाध्याये द्वितीयाह्निके ।



## अष्टमाध्यायस्य प्रथमाह्निके ।



## अष्टमाध्यायस्य द्वितीयाह्निके ।



## नवमाध्यायस्य प्रथमाह्निके ।

## नवमाध्यायस्य द्वितीयाह्निके ।



## दशमाध्यायस्य प्रथमाह्निके ।



## दशमाध्यायस्य द्वितीयाह्निके ।

# वैशेषिकदर्शनम् ।

## प्रथमोऽध्यायः ।

### प्रथमाह्निकम् ।

ॐ नमोधर्म्माय ।

सर्व्वे वै प्राणभृतां व्यवहाराः प्रयोजनाश्रयाः । नान्तरेण प्रयोजनं प्रवृत्तिनिवृत्ती । पश्वादयोऽप्यभिसन्धाय प्रयोजनं प्रवर्त्तन्ते निवर्त्तन्ते च । विवेकिनस्तु प्राणभृद्भेदानधिकृत्य शास्त्रप्रवृत्तिः । यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयोजनम् । अपरिसङ्ख्येयश्चार्थः । कस्मात् ? प्राणभृद्भेदस्यापरिसङ्ख्यानात् । संक्षेपतस्तु चतुर्व्विधं सुखं दुःखनिवृत्तिस्तदधिगमोपायश्चेति । तत्र प्रथमयोः प्रधानः प्रयोजनशब्दः परयोर्गौणः । शास्त्रेणाधिकुर्व्वतान्तु प्राणभृद्भेदानां पुनश्चतुर्धाभिद्यते धर्म्मोऽर्थः कामोऽपवर्गश्चेति । तइमे पुरुषार्थाइत्याचक्षते । तत्रापवर्गः परमः पुरुषार्थः । कस्मात् ? अपुनरावृत्तिश्रुतेः । क्रियाकारकोपरमाच्च । अपवर्गं खल्वधिगतः पुरुषोन पुनरावर्त्तते संसारवर्त्मसु । क्रियाकारकव्यवहारश्च सर्व्वोऽप्यपवर्गमधिगतस्योपरमति, तदवसानोऽयं व्यवहारकलापइति । अर्थः कामश्चाश्रेयानपि समनन्तरफलभावादभीप्सितोभवति, प्रणाल्या चान्यत्रोपयुज्यते । सर्व्वएवैते पुरुषार्थाः साक्षात् परम्परया वा धर्म्मादेवाभिनिष्पद्यन्ते । धर्म्म-

मन्तरेण नार्थकाममोक्षाणामधिगमः। धर्म्ममनुतिष्ठन् खल्वयमर्थं काममश्चाधिगच्छति। अपवर्गोऽपि परमं प्रयोजनं निवृत्तिलक्षणा-द्धर्म्मादशुद्ध्युपरमे मनसः प्रसत्तौ सत्यां तत्त्वज्ञानान्निष्पद्यमानः प्रणाल्या धर्म्मसाधनएव। तस्मादस्मिन् तत्त्वज्ञानार्थे शास्त्रे,—

**अथातोधर्म्मं व्याख्यास्यामः**(१) ॥१॥

तत्र लोके येष्वर्थेषु यानि प्रसिद्धानि पदानि, तानि सति सम्भवे तदार्थान्येव सूत्रेष्वपि मन्तव्यानि। न त्वध्याहारादिभिरेषा-मर्थः परिकल्पनीयः परिभाषितव्योवा। कस्मात्? अभिप्रायभेदा-पत्तेः। एवं खल्वन्योऽभिप्रायस्तन्त्रकर्तुरभिप्रायात् प्रवक्तुरापद्येत। तच्चानिष्टम्।

प्रतिकूलवेदनीयेन दुःखजालेनानिशमुपतप्यमानाविवेकिनस्त-ज्जिहासवस्तत्त्वज्ञानमर्थयमानास्तदर्थमुपासदन्नन्तेवासिनः, अथेदानीं धर्म्मं व्याख्यास्यामः। कस्मात्? तत्साधनभावादिति पदानां साम-र्थ्यम। धर्म्मात् खल्वयं पुरुषोविशुद्धसत्त्वस्तत्त्वज्ञानायोपकल्पते। तत्त्वञ्च जानन् निःश्रेयसमधिगच्छति। यथोक्तम्। "धर्म्मविशेषप्र-सूतात् * * तत्त्वज्ञानान्निःश्रेयसम्" इति। तन्त्रान्तरसमाचाराच्च। तन्त्रान्तरे चायमर्थोऽनुशिष्यते। नचैतदिह प्रतिषिद्धम्। अप्रतिषिद्धञ्च परमतमनुमतं भवति। विशेषाभिधित्सया तु शास्त्रारम्भः। यदिदं

---

(१) वैशेषिकतन्त्रे यः सूत्रपाठोदृश्यते स तु सर्व्वत्र समीचीनतया न प्रतिभाति। परमनन्यगतिकतया प्रायः सोसाइटीमुद्रितपुस्तकानुसारेण सूत्रपाठइहादृतः। अनुमीयते प्रकृतसूत्रपाठलाभे सति दर्शनान्तरैर्व्वि-रोधस्याल्पता भविष्यतीति।

वैशेषिकं नाम शास्त्रमारब्धं, तत् खलु तन्त्रान्तराद्विशेषस्यार्थस्याभिधानायेति ।

त्रिधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशोलक्षणं परीक्षा चेति । विभागोऽपि तेन तेन रूपेणोद्देशएव । तत्रोद्देशोनाम नामधेयेन वस्तुनोऽभिधानम् । तेन हि सामान्येन भवत्युपदेशोवस्तूनामिति । कियन्तः कतिविधाश्चेत्युपसङ्ख्यानं विभागः । ततोहि विशेषतोभक्तिरिति । येन पुनरुद्दिष्टं वस्तु लक्ष्यते इदमित्थम्भूतमिति, तल्लक्षणम् । समानासमानजातीयव्यवच्छेदोलक्षणार्थः । उद्दिष्टस्य लक्षितस्य च विनेयबुद्धिमारूढस्य परमतनिराकरणेन न्यायेन यदुपपादनं सा परीक्षा । तेन हि परितईक्षा भवति । ईक्षा पुनरीक्षणमवधारणं निश्चयइति । कस्मात् पुनरेतादृशी शास्त्रप्रवृत्तिः ? सुखेनार्थग्रहणोपपत्तेः । उपदिष्टस्य खल्वर्थस्यैवं सति सुखेन ग्रहणमुपपद्यते नान्यथा । प्राणभृद्भेदानामनुग्रहार्थश्च शास्त्रारम्भः । तस्मादेतादृशी शास्त्रप्रवृत्तिरिति । तत्रोद्दिष्टस्य प्रविभक्तस्य च लक्षणवचनं द्रव्यादेरर्थस्य । धर्म्मस्य प्रविभागः सन्नपि नोक्तः । अनधिकारात् । तत्त्वज्ञानार्थं हि शास्त्रस्यारम्भइति । तन्त्रान्तरोपदेशाच्च । तन्त्रान्तरे चायमर्थोविस्तरेणोपदिष्टः । संक्षेपतस्त्वाचार्य्यः सूचयिष्यति । तस्मादुद्दिष्टस्य लक्षणवचनम्,—

**यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः ॥ २ ॥**

अभ्युदयोमङ्गलं श्रेयइत्यनर्थान्तरम् । तत् खल्वाभिमुख्येनाप्तुं यतते पुरुषः, यतमानश्चाप्नोति । निःशेषं श्रेयोनिःश्रेयसमपवर्गः ।

तत्र हि निःशेषं श्रेयः। अपवर्गे खल्वधिगते सर्व्वमन्यत् श्रेयः परिसमाप्यते कृतकृत्यश्च पुरुषोभवति, नास्य किञ्चित् करणीयं किञ्चिचाप्तव्यमवशिष्यते। अभ्युदयस्य सतोनिःश्रेयसाभ्यर्हितत्वात् पृथग्वचनम्। यस्मादभ्युदयनिश्रेयसयोः सिद्धिर्निष्पत्तिः स धर्म्मः। कस्मादभ्युदयनिःश्रेयसयोर्निष्पत्तिः? योऽयं प्रवृत्तिर्वागबुद्धिशरीरारम्भः, तस्मादभ्युदयनिःश्रेयसयोर्निष्पत्तिः। तत्र, वाचा सत्यं हितं प्रियं स्वाध्यायञ्च, मनसा दयामस्पृहां श्रद्धाञ्च, शरीरेण दानं परिचरणं परित्राणञ्चाचरन् पुरुषोधर्म्ममाचरतीत्युच्यते। "यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि" इति चाम्नायोयजतिशब्दवाच्यं धर्म्ममाह।

अनवस्थानात् फलानुपपत्तिरिति चेन्न, मृगमदवासनावदुपपत्तेः। यजतिः खल्वयं भङ्गी न फलकालमवतिष्ठते। तावत्कालमनवस्थिताच्च तस्मादभ्युदयनिःश्रेयसयोर्निष्पत्तिर्नोपपद्यते। नायं दोषः। कस्मात्? मृगमदवासनावदुपपत्तेः। यथा खलु मृगमदवासनावासितः पटोमृगमदापगमेऽपि मृगमदगन्धवानेवोपलभ्यते। अतिशयाधानोपपत्तेः। तथा विलीनोऽपि यजतिः कर्त्तर्य्यतिशयं कमप्यादधानएव विलीयते। सोऽयमतिशयः संस्कारोऽपूर्व्वं धर्म्मः पुण्यं नियोगः कार्य्यमित्युच्चावचनामभिर्य्यपदिश्यते। लोकेऽपि पथ्यापथ्योपयोगादिभिः कर्षणादिभिश्चानवस्थितैरपि कालान्तरे तत्तत्फलमुत्पद्यते, अतिशयाधानोपपत्तेः। एवं धर्म्मोऽप्यतिशयमादधानएव विलीयते। सोऽयं शक्तिविशेषोदृष्टादृष्टानामविशेषेण कर्म्मणामाधेयः। तन्त्रान्तरे चैतच्चिन्तितमित्युपरराम भगवान् सूत्रकारः। सोऽयमपरोधर्म्मस्तत्त्वज्ञानार्थत्वात्। परस्य धर्म्मस्तत्त्वज्ञानं, निःश्रेयसहेतुत्वात्। योऽयं लक्षितोधर्म्मः,—

## तद्वचनादाम्नायस्य प्रामाण्यम् ॥ ३ ॥

आम्नायोवेदः आचार्य्यसकाशादभ्यासात्। प्रामाण्यं प्रमाणभावः। साध्यत्वादनपदेशः। ननु खलु भोः धर्म्मस्य वचनादाम्नायस्य प्रमाणभावः साध्यते। तच्चैतदनुपपन्नम्। कस्मात्? साध्यत्वात्। धर्म्मवचनात् प्रमाणभावइति साध्यमेतत्। न वै धर्म्मवचनप्रमाणभावयोः प्रसिद्धिरस्ति। तस्मात् तद्वचनादित्ययमनपदेशोऽहेतुः। प्रसिद्धिपूर्व्वकत्वादपदेशस्य। प्रसिद्धेः खल्वभावे यादृगिदं भवति; स्पर्शवत्त्वात् पृथिव्यां जलभावइति, तादृगेतद्भवति तद्वचनादाम्नायस्य प्रमाणभावइति। दृष्टान्ताभावाच्च। लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः। साध्यसाधर्म्यात् तद्धर्म्मभावी दृष्टान्तउदाहरणम्। तद्विपर्य्ययाद्वा विपरीतम्। उदाहरणसाधर्म्यात् तद्वैधर्म्याद्वा साध्यसाधनं हेतुः। तत्र धर्म्मवचनात् प्रमाणभावे साधनीये न खल्वपि साधर्म्यात् दृष्टान्तोऽस्ति, न वैधर्म्यात्। दृष्टान्ताभावाच्च तद्वचनादित्यनपदेशः। दृष्टान्तसमाधिना हि स्वपक्षः स्थापनीयोभवति नान्यथा। इतरेतरापेक्षसिद्धेश्च। योऽयं धर्म्मस्य वचनादाम्नायस्य प्रमाणभावः, तच्चेतरदितरदपेक्ष्य सिध्यति। कथम्? आम्नायस्य प्रमाणभावे सिद्धे तत्प्रमितोधर्म्मः प्रमाणम्। सिद्धे च धर्म्मस्य प्रमाणभावे तद्वचनादाम्नायस्य प्रमाणभावः। तस्मादितरस्येतरदपेक्ष्य सिद्धेस्तयोरेकस्य सिध्यभावे नापरोऽपि सेद्धुमर्हतीति।

अस्य प्रतिषेधप्रपञ्चस्योत्तरम्। प्रमाणभावोपपत्तेरप्रतिषेधः। अपदेशप्रतिषेधोनोपपद्यते। कस्मात्? धर्म्मस्य प्रमाणभावोपपत्तेः। धर्म्मः खल्वयं प्रामाणिकोऽर्थः। बाह्यानामपि सम्प्रतिपत्तेः। बाह्यत-

रादिषु चाविशेषात्। येऽपि नास्ति परलोकइति प्रतिपन्नास्तेषामपि सम्प्रतिपत्तिरेव धर्म्मे। अथाप्येतदाहुः। "अहिंसापरमोधर्म्मः पापमात्मप्रपीडनम्" इति। विशेषे तु विप्रतिपत्तिरिति। सेयमज्ञाननिमित्ता विप्रतिपत्तिर्न खल्वपि सर्व्वलोकप्रसिद्धं धर्म्मं प्रतिषेद्धुं क्षमते। यं वै सर्व्वे लोकाः स्वरसेनानुभवन्ति, नासौ निर्मूलो भवितुमर्हति। तस्मान्मूलेन भवितव्यम्। देहात्मवादस्त्वन्यथोपपन्नो वलीयसा प्रमाणेन विरोधाद्बाध्यते। सोऽपि नैकान्ततोनिर्मूलः। कस्मात्? तत्संबन्धात्तच्छब्दोपपत्तेः। आत्मसंबन्धात् खल्वात्मशब्दो-देहे उपपद्यते इति। तदेवं कोऽसौ कीदृशश्चेत्यत्र विप्रतिपत्तिर्न वस्तुनि। तस्मात् प्रसिद्धिसद्भावात्तद्वचनादित्ययमपदेशोनानपदेशः। प्रामाणिकोहि धर्म्मः। प्रामाणिकवचनानाञ्च प्रमाणभावोलोके-दृष्टः। तस्मादुपपन्नस्तद्वचनादाम्नायस्य प्रमाणभावइति। एतेने-तरेतरापेक्षसिद्धिः प्रत्युक्ता। पूर्व्वे खल्वृषयः साक्षात्कृतधर्म्माणो हिताहितविभागं विद्वांसोभूतदयया लोकमुपादिशन्। न चैषामु-पदिष्टोऽर्थोमिथ्येति। यश्चायं प्रतिनियतोभोगः, यच्च जगतो वैचित्र्यं, नैतदाकस्मिकं भवितुमर्हति। कस्मात्? उपजनधर्म्मकाणां हेतु-नियमात्। ये वै केचिदुपजनधर्म्माणस्तेषां नियमतोहेतुभिर्भवि-तव्यम्। तत्र चासम्भवन् लौकिकोहेतुः प्रत्यनीकभावादलौकिकं हेतुं कल्पयति। तदेवं प्रमाणावगतोधर्म्मस्तद्वचनादाम्नायस्य प्रामाण्यम्।

प्रमाणमिति खल्वयं करणाभिधायी शब्दः। प्रमाणभावः पुनः प्रमाणेन योऽर्थः प्रमीयते, तस्य तथाभावे भवति नान्यथा। तथाभावस्तु येन रूपेणार्थः प्रतीयते, तस्य तेन रूपेण भवनं सत्ताऽविपर्य्यय

इति। धर्म्मश्चाम्नायार्थः। तस्य च तथाभावस्य प्रमाणादवगतेस्तद्वचनात् प्रामाण्यमाम्नायस्येति । अस्मादृशांश्चान्तेवासिनोऽधिकृत्येत-त्प्रामाण्यवचनमाम्नायस्य ; येषां न खल्वपि विप्रतिपत्तिर्धर्म्मे। आम्नायप्रमाण्ये त्वमीषामपि विमर्शउपपद्यते । कस्मात् ? प्रमाणगम्यत्वादर्थस्य । योऽयमाम्नायस्यार्थः, स खलु प्रमाणान्तरावगम्यः । प्रमाणमपेक्षमाणस्य शब्दस्य प्रमाणभावाभिमानात्। तस्मात् प्रमाणगम्यस्यार्थस्य वचनादाम्नायस्य प्रमाणभावइति । नचायं नियमः; विमृश्यैवार्थस्यावधारणमिति। किन्तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं लोके, शास्त्रे वादे च विमर्शवर्जमपि। स खल्वयं धर्म्मः प्रवृत्तिलक्षणोनिवृत्तिलक्षणश्च। तत्र योऽयं निवृत्तिलक्षणोधर्म्मः, स किल्विषोपरमादिभिस्तत्त्वज्ञानं प्रसूते। तस्माच्च,—

## धर्म्मविशेषप्रसूतात् द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥ ४ ॥

चार्थे द्वन्द्वः समासः। यथावचनं विग्रहः। पदार्थानामिति शैषिकी षष्ठी। तत्त्वस्य ज्ञानमिति कर्म्मणि । साधर्म्यवैधर्म्याभ्यामिति इत्थंभावे तृतीया । द्रव्यविशेषः खल्वात्मा निःश्रेयसमधिगच्छति, तदाश्रयागुणास्तदुभयनिमित्तं कर्म्मेति क्रमवचनम्। एतावन्तोविद्यमानार्थाः। अमीषामविपरीतज्ञानार्थमुपदेशः । सोऽयमल्पेन सूत्रेण कृत्स्नस्य तन्त्रस्यार्थउद्दिष्टोवेदितव्यः।

तत्र, सामान्यादीनां पृथग्वचनमनर्थकमव्यतिरेकात् । सामा-

न्यादयो हि द्रव्यादिष्वन्तर्भवन्तो न व्यतिरिच्यन्ते इति। प्रस्थान-भेदोपपत्तेस्तु पृथग्वचनम्। पृथक्प्रस्थानानि वै तन्त्राणि प्राण-भृद्भेदानामनुग्रहायोपदिश्यन्ते। तदिदं वैशेषिकं नाम तन्त्रं, यस्य पृथक्प्रस्थानाः सामान्यादयः पदार्थाः। यथा तन्त्रान्तरे प्रमाण-प्रमेययोर्यथायथमन्तर्भवन्तोऽपि संशयादयः। तस्मात् सामान्यादिभिः पदार्थैः पृथक् प्रस्थाप्यते। तया च शास्त्रमिदं वैशेषिकं भवति। अन्यथा त्वध्यात्मविद्यामात्रमुपनिषद्वदेतत् स्यात्।

तत्र, सामान्यस्य भावः सामान्यम्। कश्च समानः? यस्तद्धर्म-वानपि न तद्भवति सोऽयं समानः, तस्य भावः सामान्यम्। तच्चैतत् सामान्यं साधर्म्ययोगः। तदुक्तम्। 'द्रवत्वमद्भिः सामान्यम्' इति। समानस्य धर्मः क्वचित् व्यवस्थितो गोत्वादिः, क्वचिच्चा-व्यवस्थित आरोहपरिणाहादिर्यथाविषयं वेदितव्यः। सामान्याद्धि विशेषाविवेकात् यथास्वं संशयविपर्ययौ भवतः। स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् विशेषञ्चाजानानः संशेते; स्थाणुर्वा भवेत् पुरुषो वेति। विपर्ययः खल्वपि; सामान्यमेव धर्ममुपलभ्य दोषाद्विपर्यस्यति स्थाणौ पुरुष इति शुक्तौ रजतमिति। मिथ्या-बुद्धिस्तु दुःखभूमिः। तदिदं सामान्यं द्रव्यादिष्वन्तर्भवदेवमर्थं पृथगुच्यते। येन विशेषेण शिष्यते स विशेषः। सामान्येन या मिथ्याबुद्धिरुदेति सेयं विशेषविवेकेनापोद्यते। तत एव यथार्थ-बुद्धिर्भवति। या तत्त्वज्ञानमित्याख्यायते। यथेदो हृते स्थाण्वादौ यो विशेषः, तद्विवेकात् तत्त्वज्ञानं भवति स्थाणौ स्थाणुरिति शुक्तौ शुक्तिरिति। सोऽयं विशेषो द्रव्यादिष्वन्तर्भवन्नेवमर्थं पृथगभिधीयते।

अथापि खल्वेकोभावस्तेन तेन विशिष्यमाणः सामान्यविशेषव्यपदेशं भजते, गुणे तदानीमन्तर्भावइति। यदि नाम परिभाषामात्रमेतौ, नैवातिरिच्येते इति।

समवायस्तु सम्यगवाप्तिरेकीभावः। अथाप्येतदुक्तम्। समवायोऽपृथग्भावइति। सोऽयं पृथक्त्वप्रतिद्वन्द्वी गुणइति। यथा खलु संयोगप्रतिद्वन्द्वी विभागः पृथक्त्वस्यायोगोनाम गुणान्तरम्, तथैव वैलक्षण्यलक्षणस्यानेकत्वलक्षणस्य वा पृथक्त्वस्य प्रतिद्वन्द्वी गुणः समवायोनाम। द्रव्यं खल्वयमाश्रयति न चासौ गुणवान् न खल्वपि कर्म्मेति। यस्य शरीरेन्द्रियवेदनाभिः संयोगविशेषोजन्म, ततः शरीरादिभिरपृथग्भावमात्मनोऽभिमन्यते। यतः खल्वयं पुरुषः संसरन् दुःखराशिमनुभवति, तदुपरमे च प्रहीणदुःखसन्तानोऽपवृज्यते। सोऽयं समवायएवमर्थं पृथगुच्यते गुणान्तर्भूतोऽपि। अथापि खल्ववाप्तिरुपश्लेषविशेषः स्यात्, गुणएवान्तर्भवति। अपरोह्युपश्लेषोन चिरमवतिष्ठते, अयन्तूत्पत्तेः प्रभृत्याविनाशमनुवर्त्तते तदपगमाच्चोपरमोभावस्येति। सोऽयमयुतसिद्धानामुपश्लेषः समवायोयुतसिद्धानाञ्च संयोगः। सन्त्यन्येऽपि पदार्थाः प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाख्यास्ते चात्रैवान्तर्भवन्ति इति।

साधर्म्यं सामान्यं, वैधर्म्यं विशेषः। आत्मादेः खलु तत्त्वज्ञानान्निःश्रेयसम्। अन्येषां तत्त्वज्ञानस्य तत्रोपयोगइति। तत्रात्मादौ मिथ्याज्ञानमनेकप्रकारं भवति, आत्मनि तावदनात्मेति अनात्मन्यात्मेति। एवं जुगुप्सितादौ यथाविषयं वेदितव्यम्। तत्त्वज्ञानञ्च खलु

मिथ्याज्ञानविपर्ययेण व्याख्यातम्। आत्मन्यात्मेति अनात्मन्यनात्मेति। एवं शेषेषु। एतस्मात् तत्त्वज्ञानान्मिथ्याज्ञानमपैति, तदपायान्निःश्रेयसमपवर्गः प्रादुर्भवति। मिथ्याज्ञानमूलो हि संसारः तदपाये नावतिष्ठते इति। अथ तत्त्वज्ञानार्थमुद्दिष्टस्य विभागवचनम्। तत्र,—

**पृथिव्यापस्तेजोवायुराकाशं कालोदिगात्मा मन इति द्रव्याणि ॥ ५ ॥**

तत्र, पृथिव्यप्तेजांस्यनित्यानि द्रव्याणि नित्यान्यपराणि। प्रागुत्पद्यमाना पृथिवी गन्धमात्रा प्रकृतेरुत्पद्यते। पूर्व्वमस्या आपो रसमात्राः। ताभ्यः पूर्व्वं तेजोरूपमात्रम्। ततोऽप्यर्व्वाक् वायुः स्पर्शमात्रः। पूर्व्वञ्चास्मात् शब्दमात्रमाकाशम्। तदिमे गन्धादयो गुणाः पृथिव्यादीनां निजाः। कारणगुणक्रमात्तु शब्दादयो वाय्वादिष्विति। अथाप्येतदुक्तम्,—

"आद्याद्यस्य गुणन्तेषामवाप्नोति परः परः।
यो यो यावतिथस्तेषां स स तावद्गुणः स्मृतः"—इति।

अभिभवानुद्भवौ त्वमीषां यथाविषयं वेदितव्यौ। "गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्य्यन्ताः पृथिव्याः अप्तेजोवायूनां पूर्व्वं पूर्व्वमपोह्याकाशस्योत्तरः" इति तन्त्रान्तरे चोद्भवानभिभववतामेव गुणानामुपसंख्यानमिति। सूक्ष्मेभ्यस्तेभ्यः परस्परं संहन्यमानेभ्यः स्थूलानां पृथिव्यादीनामुत्पत्तिः। वाय्वाकाशौ त्वनित्यावपि परमार्थतो व्यवहारभूमौ नित्यावुच्येते। अवान्तरसर्गप्रलययोरवस्थानात्। एतेन मनो व्याख्यातम्।

तत्रापां पृथग्वचनं न कर्तव्यम्। कस्मात्? वायुसन्निपातात् तदुत्पत्तेः।

विशिष्टयोर्वाय्वोः सन्निपातात् खल्वापउत्पद्यन्ते इति। कृत्रिमोत्पत्ते-स्तात्त्विकप्रतिषेधानुपपत्तेरप्रतिषेधः। वाय्वोः सन्निपातात् खल्वापः कृत्रिमाउत्पद्यन्ते। कृत्रिमानाञ्चापामुत्पत्तेर्न तात्त्विक्यश्चापः शक्याः प्रतिषेद्धुम्। प्रसिद्ध्यभावात्। तस्मान्नायं प्रतिषेधः पृथग्वचनं न कर्त्तव्यमिति। उत्पत्तेश्चार्थान्तरभावात्। उत्पत्तेरर्थान्तरभावाच्चा-प्रतिषेधः। याः खल्वापोवाय्वोः सन्निपातादुत्पद्यन्ते तादृसावायो-रर्थान्तरभूताभवन्ति। तस्मादप्रतिषेधः। तत्रापि सद्भावाच्च। ययो-र्वाय्वोः सन्निपातादापउत्पद्यन्ते, तत्रापि वायौ सूक्ष्माणामपां सद्भावोऽस्ति। प्रक्रियाविशेषात्तु तासामभिव्यक्तिरिति। तादृसा वायोरर्थान्तरभूताश्चापः पृथग्वक्तव्याः। अथापि खल्वस्ति वायौ सूक्ष्माणामपां सद्भावइति कुतएतत् प्रतिपत्तव्यम्? अनुपादानो-त्पत्त्यनुपपत्तेः। न वै वाय्वोः सन्निपातादनुपादानानामपामुत्पत्ति रुपपद्यते। अतः प्रतिपद्यामहे अस्ति सद्भावोऽपां सूक्ष्माणामिति।

कालदिशोः पृथग्वचनं कार्य्यभेदाद्व्यपदेशभेदज्ञापनाय। आ-काशः खल्वेकोऽपि कार्य्यभेदाद्व्यपदेशभेदं भजते। न त्वर्थान्तरमाका-शात् तत्त्वतः कालोदिक् चेति। कया युक्त्या? तदन्तरेणाप्युप-लब्धेरुपपत्तेः। यच्चैतत् कालस्य दिशश्चोपकल्पनं तदुपलब्धेरन्य-थानुपपत्त्या। सा चोपलब्धिरन्तरेणापि कालं दिशञ्चोपपद्यते इति न तयोरर्थान्तरभूतयोः परिकल्पनम्। तपनक्रियासंयोगोपनयार्थं हि तयोरुपकल्पनम्। सोऽयमुपनयआकाशेनोपपद्यते। अन्यत्र सतो-निमित्तस्यान्यत्रोपनयानुपलब्धेरप्रतिषेधः। योऽयं कालस्य दिशश्च प्रतिषेधः, स नोपपद्यते। कस्मात्? यस्मादन्यत्र सतोनिमित्तस्यान्यत्रो-

पनयेनोपलभ्यते। तत्कार्य्यानुपलब्धेः। आकाशञ्चेदन्यस्य धर्ममन्यत्रोपनयेत्, एकस्यां भेर्य्यामभिहतायां सर्व्वासु भेरीषु शब्दाउत्पद्येरन्। काश्मीरककुङ्कुमारुणिम्ना कीकटेषु स्फटिकउपरज्येत। तुल्यत्वादहेतुः। अन्यत्र सतोनिमित्तस्यान्यत्रापनयानुपलब्धेरित्ययमहेतुः। कस्मात्? तुल्यत्वात्। कालदिशोः परिकल्पनेऽप्येतत्तुल्यं भवति। नहि कालोप्येकत्राभिघातमन्यत्रोपनयति। क्रियैवानेनोपनीयते संयोगस्त्वसाविति चेत्, दिगेवैनमुपनयतु। संयोगोपनयार्थं हि तस्याः कल्पनम्। या च क्रिया निमित्तमभिघातस्य, सैव वा किमिति नोपनीयते। सति चैवं सर्व्वत्राभिघातप्रसङ्गः। तस्माद्वस्तुशक्तिरेवैतादृशी यत् किञ्चिदेव कुत्रचिदुपनीयते न सर्व्वं सर्व्वत्र—इति कथमाकाशोऽप्यनियमेनार्थानुपनयेत्। आत्मा तु चेतनोनैवंस्वभावः। जड़ोहि तथा स्यात्। दृष्टं खल्वन्यस्य गन्धादिकमन्यत्रोपनयद्वाय्वादि द्रव्यमचेतनमिति। तस्मादाकाशस्य सतः कालस्य दिशश्च पृथग्वचनं कार्य्यभेदाद्व्यपदेशभेदार्थम्। सोऽयं पूर्व्ववत् प्रस्थानभेदः। अथ यथाक्रममुद्दिष्टाः,—

**रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः॥ ६॥**

रूपादयश्चत्वारोयथायथं चक्षुरादिभिरिन्द्रियैर्गृह्यन्ते। चक्षुषा रूपं, रसनेन रसः, घ्राणेन गन्धः, त्वचा स्पर्शइति। संख्याश्चैकत्वमारभ्य परपर्य्यन्ताअनेकप्रकाराः। परिमाणानि महदादीनि। यतः सर्व्वतोभावेन मीयन्तेऽर्थाः। पृथक्त्वमसंयोगोवैलक्षण्यमने-

कता चेति। अथाप्येतदुक्तम्। पृथक्त्वं स्यादसंयोगोवैलक्षण्यमनेक-तेति। संयोगोनाम येन सम्यग्युज्यन्तेऽर्थाः। योगः पुनरुपश्लेषः। विभागस्तु तत्प्रत्यनीकभावापन्नोगुणः। परत्वमपरत्वञ्च पूर्व्वत्वमु-त्तरत्वं दूरत्वमन्तिकत्वञ्च। बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्। सुख-दुःखे परस्परप्रत्यनीकभावापन्नौ गुणौ प्रत्यात्ममनुकूलप्रतिकूलवेदनी-यौ। तथेच्छाद्वेषौ। इच्छन् प्रवर्त्तते द्विषन् निवर्त्तते इति। या तु द्विषतामपि परप्रमापणादौ प्रवृत्तिः, साऽपि तदिच्छातएव। एनं हन्मीतीच्छया हि हन्ति। प्रयत्नस्त्विच्छादिकार्य्यं क्रियानिमित्तं गुणः। प्रयतमानोहि क्रियामभिनिर्व्वर्त्तयतीति। केचिदेतेषु न सहजाः, आश्रयोत्पत्तेः पश्चात् पुरुषप्रयत्नादुत्पद्यन्ते सत्येवाश्रये चोपरमन्ति। सहजास्त्वाश्रयोत्पत्तिमनूत्पद्यन्ते यावद्विनाशञ्चानु-वर्त्तन्ते। संख्याः खल्वपि उत्पत्तेः प्रभृत्याविनाशमनुवर्त्तन्ते। न ह्येकं न कदाचिदेकं भवति द्वौ वा न द्वौ। प्रत्यक्षन्त्वस्य द्वयोरिन्द्रि-यसन्निकर्षादुपजायते। द्वयोः खल्वेतद्भवतीति।

चकारेण गुरुत्वलघुत्वद्रवत्वस्नेहसंस्कारधर्म्माधर्म्मशब्दसमवायशक्तिप्र भृतीनाचार्य्यः समुच्चिनोति। विप्रतिपत्तेस्तु रूपादीनां नामधेयेन संकीर्त्तनम्। गुरुत्वं लघुत्वञ्चेति संयोगविभागवत् परस्परप्रत्यनीकभावा-पन्नं गुणद्वयम्। न ह्येतयोरेकस्याभावादपरस्य सिद्धिः। एकं खल्वे-कस्माद्गुरु भवद्भवत्यन्यस्मात् लघु इति। किञ्चिद्धि गुरुत्वं क्वचिद्गुरु-ण्यपि न भवति। गुरुत्वसामान्यस्य त्वभावोन भवति गुरुणीति। विशेषहेत्वभावादुभयम्। न ह्यस्ति विशेषहेतुर्गुरुत्वस्याभावोलघुत्वं न लघुत्वस्याभावोगुरुत्वमिति। विशेषहेत्वभावाद्गुरुत्वं लघुत्वञ्चेत्युभयं

गुणइति। धर्म्माधर्म्मौ तु संस्कारविशेषावेव सन्तौ लक्षणभेदात् पृथगुच्येते। पुण्येन कर्म्मणा संस्कृतः खल्वयं पुरुषोधार्म्मिकोभण्यते। पापेन कर्म्मणा तत्प्रत्यनीकभावेन संस्कारेण संसृष्टोऽधार्म्मिकइति। समवायः खलु पृथक्त्वप्रतिद्वन्द्वी गुणविशेषउपश्लेषोवा। सोऽयमयुतसिद्धानामुपश्लेषः समवायोयुतसिद्धानान्तु संयोगइति प्रकारभेदाद्व्यपदेशभेदः। शक्तिः खल्वपि प्रतिभावमनुगता न शक्यते निह्नोतुम्। शक्नोति खल्वग्निर्दग्धुं जलञ्चैतं शमयितुम्। माघकर्षणेनाधीयमानशक्तिः शस्यमधिकमुत्पादयति भूमिः। सेयं प्रत्यात्ममनुभवारूढा शक्तिः। न चैतन्निह्नवानः कश्चिदभ्यनुज्ञां लब्धुमर्हतीति। हेतुभावेऽपि वस्तुप्रत्याख्यानात् संज्ञाभेदमात्रम्। अथापि खल्वियं शक्तिर्न वस्त्वन्तरं किन्तु कारणत्वमात्रमिति। एवमपि संज्ञाभेदमात्रं स्यात्। येयं शक्तिसंज्ञा सा न मृष्यते कारणत्वसंज्ञा त्वभ्यनुज्ञायते। वस्तुतत्त्वन्तु न प्रत्याख्यायतेइति। यद्वै भवान् कारणत्वमिति मन्यते, न तस्यास्तिभावः शक्यः प्रत्याख्यातुमिति। अनतिरेकेऽपि तुल्यम्। अथापि खल्वयं हेतुभावोहेतोर्नातिरिच्यते, शक्तिरपि तर्हि शक्तिमतोनातिरिच्यते इति समानमिति। क्रमप्राप्तानि तु,—

**उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्म्माणि ॥७॥**

तत्रोत्क्षेपणं येनोर्द्धमुत्क्षिप्यते। उत्क्षेपस्तु संयोगविशेषः। यतोऽवाचीनं क्षिप्यते तदवक्षेपणम्। सत्यारम्भके संयोगे येन परोऽवयवानां संयोगस्तदाकुञ्चनम्। यतस्तु तत्प्रतिद्वन्द्वी विभागस्तत् प्रसा-

रणम् । यच्चान्यत् किञ्चित् कर्म्म, तत् सर्व्वं गमनम् । गमनेऽन्तर्भूतानामोत्क्षेपणादीनां पूर्व्ववत् पृथगभिधानमिति । प्रविभक्तानि द्रव्यगुणकर्म्माणि । सामान्यविशेषाविदानीं वक्तव्यौ । तत्र,—

**सदनित्यं द्रव्यवत्कार्य्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्म्मणामविशेषः ॥ ८ ॥**

न विशिष्यते इत्यविशेषः सामान्यम् । सदिति सत्तावत् । सत्ता च सतां भावः । सामान्यादयः खल्वन्तर्भवन्ति द्रव्यादिष्विति द्रव्यगुणकर्म्मणामेवैतत्सामान्यम् । किञ्चिन्नित्यं पारमार्थिकं किञ्चिच्च व्यावहारिकम् । तत्र, यत्कालत्रयेऽपि न स्वरूपात् प्रच्यवते, तत्कूटस्थं जगज्जन्मस्थितिभङ्गलक्षणं अतर्क्यमप्रमेयं वाङ्मनसयोरगोचरः स्वे महिम्न्यवस्थितं वस्तुभूतं पारमार्थिकं नित्यं विस्तरतस्तन्त्रान्तरेषूपदिष्टम् । ततोऽन्यत् सर्व्वमनित्यं परमार्थतः । तत्रापि किञ्चिदचिरावस्थानेन व्यवहारभूमावप्यनित्यं भवति । किञ्चिच्च प्रागुत्पन्नमवान्तरसर्गप्रलयेष्ववस्थानादनित्यमपि परमार्थतो व्यवहारभूमौ नित्यमित्यभिलप्यते । व्यवहारभूमौ खल्वेतत् सच्चाकारणवच्च । अवान्तरसर्गेष्वकारणवन्तो हि वाय्वादयोऽर्थादिति । यत् पुनः सत्परमार्थतोऽप्यकारणवत्, तत्पारमार्थिकं नित्यं वस्तुभूतम् । तच्चात्र नोपदिष्टं प्रयोजनाभावात् । तत्त्वज्ञानार्थं हि शास्त्रारम्भः । तत्त्वज्ञानस्य च प्रयोजनं मिथ्याज्ञानापायादपवर्गनिष्पत्तिः । न खलु ब्रह्मात्मनोरितरेतरबुद्ध्या वध्यते पुरुषः । मुच्यते ह्यनयेत्यागमवादः । तदेवं द्रव्यगुणकर्म्मणां केषाञ्चिद्व्यवहारभूमौ नित्यानामपि न पारमार्थिकी नित्यतेत्यनित्यमिति द्रव्यगुणकर्म्मणामविशेषः ।

आत्मानः खलु वै अनुपजनापायधर्मकस्य परस्यात्मनोऽंशा-अग्नेरिव विस्फुलिङ्गाअर्णवस्येव जलबुद्बुदास्तस्मात् प्रादुर्भवन्तो जायस्व-म्रियस्व इत्येतत् तृतीयं स्थानं प्राप्ताः संसरन्तोयावदपवर्गं पृथग-वभासन्ते। अपवर्गनिष्पत्तौ पुनस्तत्रैवविशन्तोमधुनीव पुष्परसाः समुद्र इवापगाः परमे व्योम्नि अवान्तराकाशवद्विलीनाः तेनैकी-भवन्ति न तदानीं पृथगवभासन्ते स्वेनैव रूपेणावतिष्ठन्ते, तत्परमं निर्व्वाणम्। ते खल्वमी नित्याभवन्तोऽप्येवमनित्याभण्यन्ते। एवं खलु द्वैताद्वैतागमप्रवृत्तिः।

गुणाः कर्म्माणि च द्रव्यैर्युज्यन्ते, द्रव्याणि द्रव्यैः पृथिव्यद्भि-रापस्तेजसा पृथिवी पृथिव्यन्तरेण आपोऽवन्तरेण परमाणुः परमा-ण्वन्तरेण। एवं शेषेषु। तदेवं सर्व्वाणि द्रव्यवन्ति। अतोद्रव्यव-दिति द्रव्यगुणकर्म्मणामविशेषः। किञ्चित् कस्यचित् कार्य्यं किञ्चिच्च कस्यचिदिति कार्य्यमितिद्रव्यगुणकर्म्मणामविशेषः। एतेन कारणं व्याख्यातम्। सन्ति द्रव्याणि सन्तोगुणाः सन्ति कर्म्माणि, अनित्यानि द्रव्याणि अनित्यागुणा अनित्यानि कर्म्माणीत्येवं समानानि द्रव्याणि समानागुणाः समानानि कर्म्माणि द्रव्यगुणकर्म्माणि च। समानानां भावः सामान्यम्। अतः सामान्यवदिति द्रव्यगुणकर्म्मणामविशेषः। द्रव्यं स्वेन रूपेण विशिष्यते गुणकर्म्मभ्यां, कर्म्मापि स्वेनैव रूपेण द्रव्यगुणा भ्याम्, तथा द्रव्यं द्रव्यान्तरात्, गुणोगुणान्तरात्, कर्म्म कर्म्मान्तरात्; पृथिवी पृथिव्यन्तरादापोऽवन्तरात् तेजस्तेजोऽन्तरादित्यादि यथा-विषयं वेदितव्यम्। एकं खल्वेकेन रूपेण समानमप्यन्येन स्वेन रूपा-न्तरेण तस्माद्विशिष्यते। अतः विशेषवदित्ययमपि द्रव्यगुणकर्म्मणाम-

विशेषः । अथापि परिभाषामात्रमेतौ, सामान्यविशेषवदित्यविशेष एव द्रव्यगुणकर्म्मणाम् । द्रव्यगुणकर्म्मसु ह्यसौ भवतीति । सामान्यविशेषवचने चेत्थमाचार्य्यप्रवृत्तिर्ज्ञापयति; इत्थं सामान्यमित्थञ्च विशेषः । शेषावतः खल्वाचार्य्यस्योपेत्य वक्तव्यमन्यत्र प्रवृत्तिर्नोपपद्यते इति । तदेवं द्रव्यगुणकर्म्मणामविशेषउक्तः । अथेदानीं द्रव्यगुणयोर्गुणकर्म्मणोर्द्रव्यकर्म्मणोर्द्रव्यस्य गुणस्य कर्म्मणश्चाविशेषोऽभिधीयते,—

## द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यं ॥ ९ ॥

जातिर्नाम सामान्यं बुद्ध्यपेक्षम् । इदं द्रव्यमयं गुणइत्युपलब्धेरनयोः प्रतिस्वं सामान्यमनपह्नवं भवति । साधर्म्यं सामान्यम् । तदिदं द्रव्यगुणकर्म्मणां महतः सामान्यात् द्रव्यगुणयोरवान्तरं वेदितव्यम् । न वै खलु पृथिव्यपश्चारभते आपः पृथिवीं रूपं रसं रसो रूपमिति कुतएतदित्यतआह,—

## द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्॥१०॥

अन्यत् द्रव्यं द्रव्यान्तरम् । येनारभ्यते यच्चारभ्यते, तदुभयमपि द्रव्यमिति सजातीयमारभन्ते द्रव्याणि । पृथिवी पृथिवीजातीयमारभते नाजातीयमिति । एतेन गुणाव्याख्याताः । गुणारम्भादनियमः । पृथिव्यादि द्रव्यं रूपादिगुणमारभते । तस्मात् नायं नियमः द्रव्याणि द्रव्यान्तरमारभन्ते इति । द्रव्ये नियमोपपत्तेरप्रतिषेधः । नायं नियमप्रतिषेधः । कस्मात् ? द्रव्ये नियमोपपत्तेः । न ब्रूमोद्रव्याणि गुणं नारभन्ते इति । किन्तु द्रव्यमन्यत् द्रव्यमारभमाणं सजातीयमारभते इति द्रव्ये नियमउपपद्यते । येयं पृथिवी, सा खलु पृथि-

व्यन्तरमारभते, एवं आपोऽवन्तरं तेजस्तेजोऽन्तरमिति । न खल्वपि पृथिव्यपआरभते आपस्तेजः तेजः पृथिवीमिति । वाय्वाकाशौ खल्वपि सूक्ष्मौ द्रव्यमारभमाणौ स्थूलौ वाय्वाकाशावारभेते, नापरं द्रव्यम् । एतेन कालदिशोर्द्रव्यारम्भकत्वं व्याख्यातम् । आत्मा च क्षेत्रज्ञः क्षेत्रज्ञान्तरमारभते पितापुत्रव्यपदेशात् "आत्मा वै जायते पुत्रः" इत्यागमवादाच्चारम्भकत्वं गौणं मन्तव्यम् । एतेन मनोव्याख्यातम् । अथापि खलु नायं नियमोद्रव्येण सताऽवश्यं सजातीयं द्रव्यमारब्धव्यमिति । किन्तु द्रव्यं द्रव्यमारभमाणं सजातीयमारभते न विजातीयमिति । एतेन गुणस्य गुणारम्भकत्वं व्याख्यातम् ।

परमात्मनः सर्व्वोत्पत्तेरनियमः । परस्मात् खल्वात्मनः सर्व्वमुत्पद्यते, ततोनायं नियमोभवति द्रव्यं द्रव्यान्तरमारभमाणं सजातीयमारभते इति । उपादाननियमोपपत्तेरप्रतिषेधः । द्रव्यं द्रव्यस्योपादानं भवत् सजातीयस्य भवतीत्युपादाननियमउपपद्यते । तस्मादप्रतिषेधः । प्रकृतिर्नाम त्रिगुणात्मकः परस्यात्मनः शक्तिभेदः त्रिगुणात्मकस्य पृथिव्यादेरुपादानं न साक्षात् परमात्मा । कथं ज्ञायते ? जडचैतन्ययोरुपादानोपादेयभावानुपपत्तेः । यदि वै उपपद्येत, तयोरैकजात्यनियमेन कार्य्येऽपि चैतन्यं प्रसज्येत । शक्तिभेदस्त्वयमात्मनोनातिरिच्यते । लोके तथोपलब्धेः । अवस्तुत्वाच्च । शक्तिभेदः खल्वसौ वस्तुभूतोन भवति । वस्तुभूतस्त्वात्मा । जगदप्यवस्तुभूतमेव सत् व्यवहारभूमौ वस्तुवदवभासते । तत्त्वज्ञानार्थत्वात् शास्त्रस्य मिथ्याज्ञानविषयाणाममीषां वचनम् । तेषाञ्च वस्तुत्वा-

[illegible] वस्तुत्वमवलम्ब्य

तत्त्वज्ञानमुपदिश्यते । सोऽयं शक्तिभेदोजगच्च न वस्त्विरत्येकेषां दर्शनम्। विपरीतमन्येषाम् । प्रयोजनभावात्तु न तत्त्वनिर्णयार्थं प्रवृत्तिराचार्य्यस्य। चिन्मात्रश्च परमात्मा न परमार्थतोगुणादिमानित्यद्रव्यं भवति। यस्त्वपरः चेत्रज्ञोनामात्मा सोऽप्यग्निस्फुलिङ्गादिवच्चिन्मात्रएव सन् व्यवहारभूमौ गुणादिमानिव भवतीति द्रव्यमुच्यते। तस्य च तत्त्वज्ञानान्मिथ्याज्ञानोपमर्द्देनापवर्गनिष्पत्तिर्भवतीति । अथापि खल्वेकमुत्क्षेपणमपरमुत्क्षेपणमारभते। लोष्टादेः सुदूरमूर्द्ध्वमुत्सर्पणं खल्वन्यथा नोपपद्यते। क्षणचतुष्टयावस्थायिनी हि क्रिया नैका तावत्कालमवतिष्ठते। एवं सति द्रव्यगुणवत् कर्म्मणोऽपि सजातीयारम्भकत्वं साधर्म्यं प्रसज्यते इति। यदि वै कर्म्मसाध्यं कर्म्म विद्येत, भवेदेतदेवम् । न त्वेतदस्तीत्याह,—

## कर्म्म कर्म्मसाध्यं न विद्यते ॥ ११ ॥

न वै खलु किञ्चित् कर्म्म कर्म्मणा साध्यते। कर्म्म यस्य साध्यं तत् कर्म्मसाध्यम् । न त्वेवंविधं कर्म्म। कर्म्म न कर्म्मणः कारणमित्यर्थः। कस्मात्? उभयथाऽप्यनुपपत्तेः। न वै सजातीयं कर्म्म कर्म्मणा साध्यते, न विजातीयम्। कर्म्म खल्वन्यत् कर्म्म समानमसमानं वा साधयदुत्पन्नमेव साधयेत् । विलम्बकारणानुपपत्तेः। तत्र पूर्व्वेण कर्म्मणा विभागे निष्पादिते द्वितीयात् कर्म्मणोनेदानीं विभागान्तरनिष्पत्तिः सम्भवति। स्वप्रतिद्वन्द्विनः संयोगान्तरस्याभावात्। एतेन पूर्व्वसंयोगनाशोव्याख्यातः। उत्तरस्य पूर्व्वभावादिति चेन्न, विनाशानुपपत्तेः। अत्र मन्येत, योऽयमन्तरः संयोगः पूर्व्वस्मात् कर्म्मण-

उत्पद्यते, सोऽयमपरस्य कर्म्मणः पूर्व्वोभवति, तमेवैतत् नाशयदन्यं संयोगमुत्पादयिष्यतीति। तच्च नैवं मन्तव्यम्। कस्मात्? विनाशानुपपत्तेः। योऽयं पूर्व्वस्य कर्म्मणउत्तरः संयोगः स खल्वपरस्य कर्म्मणः पूर्व्वोभवन्नपरस्मात् कर्म्मणोनंक्ष्यतीति मन्यते। तच्च नोपपद्यते। यदा खल्वयमुत्तरः संयोगः पूर्व्वस्मात् कर्म्मणउत्पद्यते, तदा परस्मात् कर्म्मणो विनाशेनास्य भवितव्यम्। न त्वेवं भवितुमर्हति। न ह्युत्पद्यते च विनश्यति चेत्येकस्यैकदा द्वयमुपपद्यते। विभागस्य चानुत्पत्तेः। यत्कालं वै पूर्व्वस्मात् कर्म्मणः पूर्व्वः संयोगो नश्यति, तत्कालमुत्तरस्मात् कर्म्मणोविभागेन भवितव्यम्। न त्विदानीं विभागउत्पत्तुमर्हति। तत्प्रत्यनीकस्य संयोगस्याभावात्। प्रमाणगम्यस्तु हेतुफलभावोन कर्म्मणोरस्ति। इतरथा कर्म्मवतोद्रव्यस्य यावन्न द्रव्यान्तरेणावरोधस्तावदनुपरमः कर्म्मणः प्राप्नोति।

अवयवकर्म्मणाऽवयविकर्म्मोत्पत्तेरप्रतिषेधः। अथापि खल्ववयवस्यैकदेशस्य कर्म्मणा तदवयविनएकदेशिनोऽप्युपलभ्यते कर्म्म चलनाख्यम्। न ह्येतदनिमित्तं भवितुमर्हति। उपजनधर्म्मकाणां हेतुनियमात्। नचान्यदस्ति निमित्तमित्यवयवकर्म्मैव तत्र निमित्तमिति भवति प्रतिपत्तिः। तस्मात् कर्म्म कर्म्मसाध्यं न विद्यते इत्येवं प्रतिषेधोनोपपद्यते इति।

अस्य प्रतिषेधः। वेगात्तदुत्पत्तिः। वेगात् खल्ववयविनि कर्म्मोत्पद्यते नावयवकर्म्मणः। कथं ज्ञायते? तस्मिन् सत्युपलब्धेरसति चानुपलब्धेः। बलवता वेगेन प्रेर्य्यमाणस्यैकदेशस्य कर्म्मोत्पत्तौ तेनैवानुरूपस्य बलवतोवेगान्तरस्यैकदेशिन्युत्पत्तेस्तत्रोपलभ्यते कर्म्म। यदा त्वेकदेशिस्पन्दन-

समर्थोवेगोनैव तस्मिन्नाधीयते, तदेकदेशिनि नैवोत्पद्यते कर्मेति। अथापि खल्वेकदेशकर्मोत्पत्तिहेतुरेकदेशिनः कर्मोत्पादयति, न त्वेक-देशकर्मैवेति। समानोहि स हेतुरेकदेशस्यैकदेशिनश्च भवति। यं वै भवानेकदेशकर्मोत्पत्तौ हेतुं मन्यते, सोऽयमविशेषादेकदेशिकर्मोत्प-त्तावपि हेतुरिति। तस्मादवयवकर्मणाऽवयविकर्मोत्पत्तेरित्यहेतुः। यच्चोत्क्षिप्तस्य लोष्टादेः सुदूरमूर्द्धमुत्सर्पणम्, तत्रापि प्रथमकर्मप्रभवा-द्वेगात्कर्मसन्तानस्योत्पत्तिः, न त्वेकस्मात् कर्मणः कर्मान्तरस्य। यावच्च न वेगस्योपरमस्तावत् कर्मसन्तानः प्रवर्त्तते। तदुपरमे चोपरम्यते। अथाधः पतति। कर्मणः कर्महेतुत्वे न त्वेतदेवं भवतीति। एतेन कर्मणः क्षणद्वयावस्थितावपि ततः कर्मानुत्पत्तिर्व्याख्याता॥

## न द्रव्यं कार्य्यं कारणञ्च बधति॥ १२॥

स वै द्रव्यं कार्य्यं द्रव्यान्तरं गुणादिकञ्च बधति, न खल्वपि कारणम्। द्रव्यं खल्वेकमपरं द्रव्यमारभमाणमानुगुण्येनैवारभते, न कार्य्यं कारणञ्च बधतीति॥

## उभयथा गुणाः॥ १३॥

इत्थम्भावे तृतीया। गुणास्तूभयथा। गुणः क्वचित् कारणं बधति क्वचिन्न बधति। सोऽयं प्रत्यासत्त्यतिरेकात् कारणबधेनास्याभिसंबन्धः। हरिद्राचूर्णसंयोगाज्जायमाने द्रव्ये हरिद्रास्थं पीतं चूर्णस्थं शुक्लञ्च पीतं शुक्लञ्च रूपमारभते। तत्र हरिद्राचूर्णगताभ्यां तैक्ष्ण्याभ्यां आरभ्यमानेन कार्य्यद्रव्यगतेन तैक्ष्ण्यविशेषेण कारणद्रव्यगतं तैक्ष्ण्यं

बध्यते । ततः शुक्लपीतयोरवजयात् लौहित्यस्याभिव्यक्तिः। कृष्णस्त्वल्पत्वान्नाभिव्यज्यते । पृथगभावे चैतयोर्यथास्वं पूर्व्वरूपोपलब्धिरिति। एतेन हरिद्राकठिनीसंयोगे लौहित्यानभिव्यक्तिर्व्याख्याता। तन्तूनां शुक्लं पटस्य शुक्लेन न बध्यते। एवमनियमेन कार्य्यबध्यत्वं गुणानां सामान्यम्। नियमतः पुनः,—

## कार्य्यविरोधि कर्म्म ॥ १४ ॥

कार्य्यस्य विरोधि, कार्य्यं वा विरोधि यस्य, तथाभूतं कर्म्म। एकस्य कर्म्मणः कार्य्यभूतः संयोगः अपरेण कर्म्मणा वध्यते। कार्य्येण चोत्तरसंयोगेन बधः कर्म्मणामित्येतदमीषां सामान्यम् ॥

## क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम्॥ ॥ १५ ॥

क्रिया परिस्पन्दोगुणश्च रूपादिर्यत्रास्ति तत् क्रियागुणवत्। यत् च समवायिकारणं तत् द्रव्यमिति द्रव्यलक्षणं द्रव्याणां सामान्यम्। परिस्पन्दोनाम स्वभावोद्रव्याणाम्। सेयं पृथिव्यामप्सु तेजसि वायौ च स्थवीयसी सर्व्वोपलब्धियोग्या। आकाशमपि द्रव्यं द्रव्यान्तरैः पृथिव्यादिभिः संहन्यमानं क्रियावदेव भवत्यादिसर्गे। परतस्त्वनभिव्यक्तक्रियं व्यवहारभूमौ महत्त्वोपलभ्यमानं अक्रियमुच्यते। एतेन दिक्कालौ व्याख्यातौ। आत्मा खल्वक्रियोऽपि मनसः क्रियया क्रियावानिव भवति व्यवहारदशायामिति द्रव्यमुच्यते।

यदा चोत्पद्यते द्रव्यं तदानीमपि सागुणं भवति। कस्मात्? स्वाभाविकगुणानुवृत्तेः। स्वाभाविकः खल्वपि गुणोभवत्युत्पाद्यस्य। पृथिव्याग-

अपां रसस्तेजसो रूपमित्येवमादिकः स्वाभाविको गुणोऽनभिव्यक्तोऽपि न शक्यते प्रतिषेद्धुम्। तथैकत्वादयः। यस्त्वोत्पाद्यो गुणः शुक्लस्य पटस्य लौहित्यं, सोऽयमुपरञ्जनेन पुरुषेणोत्पाद्यते। तत्र योऽसौ स्वाभाविको गुणः, सोऽयमुत्पत्तिकालमपि द्रव्यस्यानुवर्त्तते। न ह्युत्पत्तिकालेऽपि द्वावेकोभवतः एकं नैकं पृथिव्यादीनि वा अपृथगिति। स्वाभाविकेष्वपि गुणेषु द्रव्याणां कारणभावोऽनुमीयते। उपजनधर्म्मकाणां हेतुनियमात्। सद्भवन्तश्चैते द्रव्येषु समवयन्तीति द्रव्यमेषां कारणमुच्यते। तदुक्तम्। कारणमिति द्रव्ये कार्य्यसमवायादिति। अथाप्युत्पत्तेरुत्तरकालं द्रव्येषु गुणोत्पत्तिरिष्यते, हेतुफलयोः पूर्व्वापरभावनियमात्; ततः उत्पत्तेरुत्तरकालमेव द्रव्यव्यपदेशस्तदानीमेव च लक्षणप्रवृत्तिः। न ह्युत्पत्तिकाले द्रव्यमद्रव्यं वा शक्यं व्यपदेष्टुम्। तत्रापि तस्य हेतुभावात्। द्रव्यमुत्पद्यते इति तु भाविन्या संज्ञया संव्यवहारइति ॥

**द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्॥ १६ ॥**

योद्रव्यमाश्रयति न गुणवान् नचानपेक्षः सन् संयोगविभागेषु कारणं भवति, सोऽयं गुणः। कस्तु संयोगविभागेष्वनपेक्षः कारणम्? कर्म्मेत्याह। कर्म्म संयोगविभागौ जनयत् न किञ्चिदपेक्षते। संयोगविभागौ त्वपेक्षते किञ्चिदिति। द्रव्यं नाम द्रव्यमाश्रयदपि गुणवदेव भवति न त्वगुणवत्। कर्म्म त्वित्यम्भूतमपि कर्म्मैव। गुणस्तु द्रव्यमाश्रयति न गुणवान् नो खल्वपि कर्म्मेति। रूपादयोगुणाः सङ्ख्यादिगुण-

वन्तोऽपि ये प्रागनभिव्यक्ताः कार्य्येष्वभिव्यज्यन्ते, तथाविधगुणवन्तोन भवन्तीत्यगुणवन्तः कथ्यन्ते। एकत्वपृथक्त्वादयः स्वाभाविकागुणा-रूपादिषु न शक्याः प्रतिषेद्धुम्। न हि रूपादयः प्रत्येकमेकेन भवन्ति न वा पृथक्। एकमेतद्रूपमेतस्माद्रूपात् पृथगित्युपलब्धेरिति। प्रमाणविशेषाभावाच्च तत्त्वभाक्तव्यवस्थाऽनुपपत्तिः। द्रव्ये एकत्वा-दिप्रत्ययस्तत्त्वरूपः गुणे तु भाक्तइति व्यवस्था नोपपद्यते। कस्मात्? प्रमाणविशेषस्याभावात्। आचार्य्यप्रवृत्तिर्ज्ञापयति सामान्यादयः खल्वपि न पदार्थान्तराणि इति। यदि वै भवेयुः, कर्मवद्व्यतिरेकन्ते-षामत्राभिदध्यात्॥

**एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति-कर्म्मलक्षणम्॥१७॥**

यत् खल्वेकमेव द्रव्यमाश्रयति, न गुणोभवति, नवाऽस्ति गुणः प्रागनभिव्यक्तः पश्चादभिव्यज्यमानोयत्र, यच्च संयोगविभागेष्वनपेक्ष-कारणं, तत् कर्म। पृथिव्याद्याः रूपाद्याः उत्क्षेपणाद्याश्च व्यक्तीरूपादाय त्रिसूत्रीयं व्याख्येया॥

**द्रव्यगुणकर्म्मणां द्रव्यं कारणं सामान्यम्॥१८॥**

द्रव्यं द्रव्यमुत्पादयति गुणं कर्म चेति द्रव्यगुणकर्मणां कारणं द्रव्यमित्येतत्तस्य सामान्यम्। महावयविद्रव्यमपि खण्डावयविद्रव्यो-त्पत्तौ हेतुरिति॥

**उभयथा गुणः ॥ १९ ॥**

गुणस्तूभयथा,—क्वचित् द्रव्यगुणकर्मणां कारणं भवति क्वचिच्च न भवतीति द्रव्यगुणकर्मस्वनियतहेतुभावः सामान्यं गुणानाम्। कारण-द्रव्ययोः संयोगः कार्य्यद्रव्योत्पत्तौ हेतुर्न रूपादिकम्। कारण-रूपादिकं कार्य्यरूपादौ हेतुः। संख्यादिकन्तु न तथा। गुरुत्वादयो गुणा उत्क्षेपणाद्युत्पादयन्ति, न रूपादयइति।

**संयोगविभागवेगानां कर्म्म समानम् ॥ २० ॥**

कारणमिति प्रकृतम्। कर्म्मणा हि किञ्चिन् संयुज्यते विभज्यते च, वेगश्चास्मिन्नाधीयते इति। अथापि खल्ववयवकर्म्मणा तेषां परस्परं संयोगात् द्रव्यमुत्पद्यते, तत्र संयोगवत् कर्म्मापि द्रव्योत्पत्तौ हेतुः, न खल्वन्तरेणावयवसंयोगं द्रव्यस्यात्मलाभः, न चान्तरेण कर्म्मैतस्योत्पत्तिः। तदेवं द्रव्यस्योत्पत्तौ कर्म्मणोहेतुभावेन शक्यते प्रतिषेद्धुम्। तदेतदपरं सामान्यं कर्म्मणः प्रसज्यते इति। प्रणाल्या खल्वेतत् द्रव्यस्योत्पत्तौ हेतुः। अतिशयहेतुभावेनातिशयहेतोर्हेतु-त्वात्। इत्थमेव हि पाके दहनवदेधसां हेतुभावइति। अव्यव-धानेन तु,—

**न द्रव्याणां कर्म्म व्यतिरेकात् ॥ २१ ॥**

कर्म्म द्रव्याणामव्यवधानेन कारणं न भवति। कस्मात्? व्यतिरेकात्। यदा खल्वात्मलाभोद्रव्यस्य, तदा व्यतिरेकः कर्म्मणोभवति। संयोगेन खल्ववयवकर्म्म निवर्त्तते द्रव्यञ्चात्मानं लभते। सोऽयं कर्म्मणोव्यतिरेकः।

तस्मान्नैतदव्यवधानेन द्रव्योत्पत्तौ हेतुः। तत् खल्वव्यवधानेन हेतुः, यन्नाम सदेव कार्य्यस्योत्पत्तौ निमित्तं भवति, न त्वेवं कर्म्मेति। व्यतिरेकादित्याचार्य्यप्रवृत्तिर्ज्ञापयति व्यवधानेन कर्म्मणोद्रव्योत्पत्तौ हेतुभावेन प्रत्याख्यायते इति। साचाद्धि तस्य व्यतिरेकेन प्रणाल्या। अथापि खलु महतः पटस्यात्मप्रहाणात् परतोऽवस्थितैरेव संयोगैः खण्डस्य पटस्योत्पत्तिर्भवति। सोऽयं कर्म्मणोव्यतिरेकेऽप्युत्पद्यते। तस्मादवगच्छामः नात्र द्रव्योत्पत्तौ कर्म्मणोहेतुभावइति। कारणसामान्यमुक्त्वा कार्य्यसामान्यमभिधीयते,—

**द्रव्याणां द्रव्यं कार्य्यं सामान्यम ॥ २२ ॥**

द्रव्याणां द्रव्यमित्येवं कार्य्यं सामान्यम्। द्रव्यकारणभाववत् द्रव्यकार्य्यभावोऽपि सामान्यं द्रव्याणाम्। अनेकेषामवयवद्रव्याणामेकमवयविद्रव्यं कार्य्यमिति। यत्र महत्तैकेन तन्तुना तानप्रतितानाभ्यां पटस्योत्पत्तिः, तत्राप्यनेकेभ्यस्तन्त्वंशेभ्यएव पटउत्पद्यते, न त्वेकस्मात्तन्तोः! तानप्रतितानानुपपत्तेश्च न कल्पान्तरम्। न खल्वेकस्य तन्तोस्तानप्रतिताने उपपद्येते। योहि तन्यते यश्च प्रतितन्यते सोऽयं हेतुः। अवयवाएव तन्तोस्तन्यन्ते प्रतितन्यन्ते चेति तेषामेव हेतुभावेन त्ववयविनस्तन्तोरिति। गुणोऽपि द्रव्यमाश्रयति कर्म्मापि। तत्र यथा गुणः कार्य्यं गुणानां, तत्सामान्यात् कर्म्मापि कार्य्यं कर्म्मणां प्राप्नोति। तदेतदाचार्य्यः प्रत्याचष्टे,—

**गुणवैधर्म्यान्न कर्म्मणां कर्म्म ॥ २३ ॥**

न वै खलु कर्म्मणां कार्य्यं कर्म्म। कस्मात्? गुणवैधर्म्यात्। गुण-

साधर्म्यात् प्राप्तं गुणवैधर्म्यात् प्रतिषिध्यते । कारणगुणा रूपादयः कार्य्यगुणं रूपादिकमारभन्ते । न त्ववयवकर्मावयविनि कर्मारभते । यदि वै आरभेत, अवयवकर्मोत्पत्तावयविनि कर्मानुत्पत्तिर्नोपपद्यते । तदेतत् कृतभाष्यं पुरस्तादिति । तस्मादनैकान्तिकोहेतुः । पुरस्तात् कारणसामान्यमत्र तु कार्य्यसामान्यमाश्रित्योक्तम् । एवं परत्र ॥

## द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ॥२४॥

कार्य्यं सामान्यमिति प्रकृतम् । केषाम् ? अनन्तरनिर्दिष्टानां द्रव्यगुणकर्मणाम् । नचेदेवम्, सन्निकर्षातिरेकात् कर्मणामेव प्राप्नोति । न त्वेवं भवितुमर्हति । कस्मात् ? उपलब्धिविशेषात् । तस्मात् द्वित्वादयः संख्याः पृथक्त्वसंयोगविभागाश्चैते द्रव्यगुणकर्मणां कार्य्यं सामान्यम् । विप्रतिपत्तेर्द्वित्वप्रभृतिवचनम् । सप्तमे त्वेकत्वचिन्ता वर्त्स्यतीति । द्वे द्रव्ये त्रीणि द्रव्याणि द्वौ गुणौ त्रयोगुणाः द्वे रूपे त्रीणि रूपाणि द्वे कर्मणी त्रीणि कर्माणि द्वे उत्क्षेपणे त्रीण्युत्क्षेपणानीत्यादि यथा विषयमुपलब्धिरुत्प्रेक्षितव्या । संयोगः खल्वपि, गुणाः कर्माणि च द्रव्यैरुपश्लिष्यन्ते तानि च परस्परम् । उपश्लेषोहि संयोगः । सम्यक् युज्यते अनेनेति । सोऽयमुपश्लेषोद्रव्याणामिव गुणकर्मणोरपि कार्य्यमिति । तथा, विभक्तानि द्रव्याणि विभक्तागुणाः विभक्तानि कर्मणीति विभागोऽप्यमीषां कार्य्यमिति । यथा खलु द्वित्वादिकं द्रव्यगुणकर्मणां कार्य्यं, तथा कर्मापि द्रव्यगुणकर्मणां कार्य्यं स्यादिति दृष्टान्तवलात् पुनः प्रत्यवतिष्ठमानं प्रत्याह,—

असमवायात् सामान्यकार्य्यं कर्म्म न विद्यते ॥ २५ ॥

समानानां द्रव्यगुणकर्मणां कार्यं न भवति कर्म। कस्मात्? असमवायात्। द्वित्वादिकं हि द्रव्येषु गुणेषु कर्मसु च समवैति। समवायाद्धि कारणभावः। तदुक्तम्। कारणमिति द्रव्ये कार्यसमवायादिति। न त्वेवं कर्म। न खल्वेतत् द्रव्यइव गुणे कर्मणि च समवैति। यदि वै समवेयात्, द्वौ गुणौ द्वे कर्मणी इतिवत् गुणोगच्छति कर्म गच्छतीति प्रतीयेत। न त्वेवम्। तत्र यादृगिदं भवति रूपवत् ज्ञानमपि पृथिव्या गुणः न वाऽऽत्मनोगुणइति, तादृगेतद्भवति द्वित्वादिवत् कर्मापि द्रव्यगुणकर्मणां कार्यमिति। सोऽयं दृष्टान्तोऽस्ति हेतुस्तु नास्तीति ॥

संयोगानां द्रव्यम् ॥ २६ ॥

कार्य्यं सामान्यम्। सूक्ष्मेभ्यः पृथिव्यादिभ्यः परमात्मना संसृज्यमानेभ्यः स्थूलानि पृथिव्यादीन्युत्पद्यन्ते, अनेकेभ्यस्तन्त्वादिसंयोगेभ्यश्चैकं पटादिकमित्यादि यथाविषयं वेदितव्यम् ॥

रूपाणां रूपम् ॥ २७ ॥

रूपाणां लोहितशुक्लकृष्णाणां तेन तेन रूपेण संसृज्यमानानां पीतादिकमेकं रूपं कार्य्यं सामान्यम्। कृष्णशुक्ललोहितानि पृथिव्यप्तेजसां रूपाणि प्रकृतिभूतानि। तेभ्यएव तारतम्येन संसृज्यमानेभ्यः पीतादीनामुत्पत्तिरिति। बहूनाञ्चावयवरूपाणामेकमवयविरूपं कार्य्यमिति ॥

## गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ २८ ॥

कार्य्यं सामान्यम् । गुरुणो लोष्टादेः प्रयत्नेन हस्तसंयोगेन चोत्क्षेपण-मुत्पद्यते । अन्यदपेक्ष्य लघ्वपि भवत्यन्यपेक्ष्य गुर्विति सर्वत्रोत्क्षेपणं गुरुत्वकार्य्यमिति ॥

## संयोगविभागवेगाश्च कर्म्मणाम् ॥ २९ ॥

कार्य्यं सामान्यमिति प्रकृतम् । कर्मणा खल्वपरेण देशेन किञ्चित् संयुज्यते, पूर्वस्माद्देशाद्विभज्यते, वेगश्चास्योत्पाद्यते इति । तदेवं गुणेषु केषाञ्चित् कारणं भवदपि,—

## कारणसामान्ये द्रव्यकर्म्मणां कर्म्माकारणमुक्तम् ॥ ३० ॥

द्रव्यकर्मणामकारणमिति कारणसामान्यएवोक्तमित्युक्तं द्रव्यगुण-कर्मणां सामान्यमिति ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये प्रथमाध्यायस्याद्य-माह्निकम् ॥



उक्ताद्रव्यगुणकर्माख्याः पदार्थाः । सामान्यञ्चैषामभिहितम् । वि-शेषस्तु तत्प्रत्यनीकभावात् प्रतिपत्तव्यः । तावता तत्त्वज्ञानोत्पत्तिः पर्य्याप्ता । तत्त्वज्ञानाच्च निश्रेयसम् । सोऽयमपवर्गः । स खलु किं स्वरूपः कथञ्च प्रादुर्भवतीत्येतदिदानीमभिधीयते,—

## कारणाभावात् कार्य्याभावः ॥ १ ॥

कारणस्य मिथ्याज्ञानादेरभावात् कर्य्यस्य दोषादेरभावः । आत्मा-ऽवल्पपेतधर्मा स्वभावशुद्धस्तत्त्वम् । कामादयः सुखादयश्च मनसो-

धर्मा अनात्मन्यात्माभिमानादनादिमिथ्याज्ञानादात्मन्यवभासन्ते, लौहित्यादयइव स्फटिके दर्पणमालिन्यादयइव मुखे। सोऽयमात्माऽभेदेन मनः प्रतिसन्दधानः शरीरादिकञ्च सर्वार्थकारिणमुपकारभावादात्मानं मन्यमानः प्रियाप्रियरहितोऽपि शरीरादेरनुकूलं प्रतिकूलञ्चार्थमर्थयते द्वेष्टि च। अथ प्रवर्त्तते। प्रवर्त्तमानोधर्ममभ्युदयसाधनमधर्मञ्चानभ्युदयहेतुमाचरतीव। आचरन् तत्फलैः सुखदुःखैर्मनोगतैरेव सुखिनं दुःखिनञ्चात्मानं मन्यते। सोऽयमित्यमनवरतं धर्माधर्मफलोपभोगार्थं भवति, भूत्वा म्रियते, मृत्वा पुनर्भवति, पुनर्भूत्वा पुनर्म्रियते इत्येवमनिशमावर्त्तमानोन खिन्नभावमापद्यते। अथ विषयदोषदर्शी विरज्यते। विरक्तस्तुद्धानमिच्छति। इच्छन् तदुपायमवधारयति। अवधार्य्य तत्त्वज्ञानाय यतते। यतमानस्तत्वं जानाति। तत्त्वज्ञानञ्च दीर्घकालादरनैरन्तर्य्यसेवितं दृढभूमिः। एतस्मात् तत्त्वज्ञानात् प्रत्यनीकं मिथ्याज्ञानमपैति। मिथ्याज्ञानस्य चात्मन्यमात्मबुद्धेरनात्मन्यात्मबुद्धेश्चापगमे हेत्वभावात् दोषा अपयन्ति प्रवर्त्तनालक्षणाः। परस्येव शरीरादेरपि सुखदुःखाभ्यां न हृष्यति नचोपतप्यते। दोषस्यापाये प्रवृत्तिर्वागबुद्धिशरीरारम्भोऽपैति। इच्छाद्वेषपूर्विका हि धर्माधर्मप्रवृत्तिः। स खल्वयमात्मानं तत्वतोजानानः कस्य कामाय धर्माधर्मयोः प्रवर्त्तेत। प्रवृत्त्यपाये च कारणाभावात् जन्मापैति। जन्मनोऽपाये दुःखमन्तानोऽत्यन्तमुच्छिद्यते। कारणाभावादन्यस्य दुःखस्योत्पत्तिर्न भवति। आत्मनश्च स्वरूपेणावस्थानम्। सोऽयमपवर्गः। "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः"—इति तन्त्रान्तरसमाचाराच्चैतदेवं प्रतिपत्तव्यमिति।

कथं पुनरस्य मिथ्याज्ञानमुदेतीत्यत्र प्रयोजनाभावादप्रवृत्तिराचार्यस्य। तत्त्वज्ञानार्थं हि शास्त्रस्यारम्भः। तच्च यथावस्थितानेव मिथ्याज्ञानवतः प्राणभृद्भेदानधिकृत्योपदिश्यते। तत्त्वज्ञानस्य चोत्पत्तौ न मिथ्याज्ञानमवतिष्ठते। तदपायादपवर्गनिष्पत्तिरिति नात्र मिथ्याज्ञाननिमित्तावगमस्योपयोगः। मिथ्याज्ञाननिमित्तमनवगच्छतोऽपि क्रमस्य तत्त्वज्ञानोत्पत्त्या मिथ्याज्ञानोपरमेन दुःखनिवृत्तेरुपलब्धेः।

न वै खल्वयमपवर्गोनामार्थनीयः पुरुषस्य। कुतः? सुखोपरमादप्रवृत्तेः। सुखं खल्वनुकूलवेदनीयं प्राणभृतामपवर्गे लुप्यते इति न तत्र प्रवृत्तिः पुरुषस्य। कोहि बुद्धिमान् सर्वसुखोपरमलक्षणं भीष्ममपवर्गमर्थयेत्। न, दुःखोपरमात् प्रवृत्तेः। उच्चावचान्यरुन्तुदानि प्रतिकूलवेदनीयानि बहूनि दुःखान्यपवर्गे उपरम्यन्ते इति कथं बुद्धिमान् सर्वदुःखोपरमलक्षणं शान्तमपवर्गं नार्थयेत्। प्रभूततरं हि पुरुषाणां दुःखं भवत्यल्पीयश्च सुखम्। यथा च खल्वयं पुरुषोदुःखेनोपतप्यते न तथा सुखेन निर्वृतोभवति। सोऽयं दुःखविकल्पे सुखाभिमानोन खल्वपि न बुद्धिमतां हातव्योभवति। दृश्यते खल्वनर्थं बलवन्तं सोढुमक्षमास्तन्मात्रनिविष्टास्योद्बन्धनादिभिरात्मानं व्यापादयन्तीति। यस्तु दुःखाभावमात्रमपवर्गं प्रतिजानीते, तस्यैतत्स्यात्,—

23, 408

## न कार्य्याभावात् कारणाभावः॥२॥

कार्यस्य दुःखस्याभावात् न कारणस्य जन्मादेरभावः। एवं सति, यदा वै न भवति दुःखं तदापि जन्मादयोभवेयुः। यदि वै भवेयुः, कारणसद्भावात् दुःखमपि पुनरुत्पद्येत। तस्मान्मिथ्याज्ञानाद्यपाय-

क्रमेणात्यन्तदुःखनिवृत्तिरपवर्गोन दुःखाभावमात्रमिति। सिद्धश्चातो तस्य दुःखस्याभावोन तदर्था प्रवृत्तिरुपपद्यते। अनागतमपि दुःखं नोत्पन्नमिति नास्ति तदभावार्थमपि प्रवृत्तिः। भवच्च दुःखमन्तरेणापि तत्त्वज्ञानं स्वकारणान्नंच्यति। मिथ्याज्ञानाद्युपमर्दक्रमेण जन्मोच्छेदार्थन्तु प्रवृत्तिरुपपद्यते इति।

पर्याप्तः शास्त्रार्थः। परीचेदानीं पदार्थानां वर्त्तिष्यते। तत्राल्पत्वात् व्युत्क्रमेण सामान्यविशेषौ तावत् द्रव्यादीनां परीच्येते। श्रूयते खल्वत्र विप्रतिपत्तिरिति।

## सामान्यं विशेषइति बुद्ध्यपेक्षम्॥३॥

समानानां भावः सामान्यं तुल्यार्थता। तद्विपर्ययश्च विशेषः। सामान्यमिति विशेषइति यावेतौ प्रत्ययव्यवहारौ, तदेतत् द्वयं बुद्ध्यपेक्षम्। बुद्धिरपेक्षा यस्य, यद्वा अपेक्षते बुद्धिं तद्बुद्ध्यपेक्षम्। कथम्? येयं भिन्नेष्वभिन्ना बुद्धिस्तया हि समानव्यपदेशोभवति। तत्प्रत्यनीकभावाद्विशेषोव्याख्यातः।

न वै खलु वस्तुभूतं निमित्तमन्तरेण भिन्नेष्वभिन्ना बुद्धिर्भवति, यदस्यानिमित्तं सामान्यं नाम तत्। किञ्चास्यानिमित्तम्? सदनित्यमित्यादिभिर्यद्व्याख्यातं तदस्यानिमित्तम्। भिन्नेषु खल्वपि भावेषु कुतश्चित् सामान्यादभिन्ना बुद्धिर्भवति। यथोदकपयसोः संसृज्यमानयोः सेनावनादिषु चेति। अथापि वक्ष्यति। सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगात् द्रवत्वमद्भिः सामान्यम् इति। सामान्ये सामान्यान्तरापेक्षया न व्यवतिष्ठते बुद्धिरिति चेत् सामर्थ्याद्व्यवस्था-

स्यते। यावति न व्यवस्थोपपद्यते तावति न व्यवस्थास्यते, परतस्तु सामर्थ्याद्व्यवस्थास्यते। सामान्यभावादिवत्। यथा खल्वन्यः समानानां भावः सामान्यमन्योभावः सामान्यस्य, तस्याप्यन्यस्तस्याप्यन्यइत्यव्यवस्था बुद्धेः प्राप्नोति। सामर्थ्यात्तु व्यवतिष्ठते। तथाऽन्यत्रापि व्यवस्थास्यते। येषु समाना बुद्धिरुदेति तेष्वर्थान्तरभूतस्य सामान्यस्य परिकल्पने चोदकपयसोः संसृज्यमानयोर्द्रव्यगुणयोरन्येषु च केनचिद्रूपेण समानबुद्धिनिर्ग्राह्येषु भावेष्वर्थान्तरभूतानां सामान्यान्तराणां परिकल्पनं प्राप्नोति। तत्रान्तरेणार्थान्तरभूतं सामान्यं केनचिद्रूपेण समाना बुद्धिरिति चेत् समानमन्यत्र। एतेनैकस्यां व्यक्तौ गौरयमित्युपदिष्टस्य व्यक्त्यन्तरे गौरयमिति प्रतिपत्तिर्व्याख्याता। अथापि खल्वयं धर्मधर्मिभावः परमार्थतोऽसन्नपि विषयतादिवत् स्वभावाद्भासते। धर्मस्याभिन्नोधर्मिणोभिन्नवदुपलभ्यते। अथाप्येतदुक्तम्। अर्थक्रियाकारितया भिन्नाएव हि व्यक्तयः। ताएव व्यक्तयस्त्वभेदाजातिरुदाहृतेति। अथापि खल्वस्त्येकोभावानां भावः। स एव तेन तेन विशेषेण तत्र तत्रोपलभ्यमानः सामान्यविशेषबुद्धिहेतुराकाशादिवदिति। द्रव्याणां भावोगुणानां भावः कर्मणां भावः इत्यनुवर्त्तमानएव हि भावोव्यावर्त्तमानैर्द्रव्यादिभिर्विशिष्यते। अथाप्येतदुक्तम्। एकोभावस्तत्त्वतोयेन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाइति। यदेतत् सामान्यं यदिभावः, गुणएव। यदि चान्यत् किञ्चित् यथायथं द्रव्यादिष्वन्तर्भवति। एतेन विशेषोव्याख्यातः। अथानेकानि द्रव्यत्वादिलक्षणानि सामान्यानि भावाद्भिन्नानि मन्येरन्, नैव गुणलक्षणमतिवर्त्तन्ते इति। अथापि खलु परिभाषामात्रं सामान्यविशेषौ। परिभा-

षातोहि समाना बुद्धिर्व्विशेषबुद्धिश्चोत्पद्यते। येयं नवसु पृथिव्यादिषु द्रव्यमित्यनुगता बुद्धिः, सा खलु परिभाषाबलात्। यथा हि परिभाषाविशेषात् वादजल्पवितण्डादिव्यवहारास्तत्र तत्र प्रवर्त्तन्ते प्रत्ययाश्च तथा तथोत्पद्यन्ते, तद्वदेतत् प्रतिपत्तव्यम्। यदि वै कश्चिद्गुणपरिभाषां पृथिव्यादिषु कुर्य्यात्, तथैव ह्यस्य बुद्धिर्भवेदिति। इत्थमेव प्रतितन्त्रमभिन्नेऽप्यर्थे विभिन्ना बुद्धिरिति। यस्तु द्रव्यपरिभाषां नाभ्यनुजानाति, नासौ क्षितिपयस्तेजांस्युपलभमानोद्रव्यमिति प्रतिसन्धत्ते। यस्यार्थान्तरभूतं द्रव्यत्वादिकं, तस्यैतन्नोपपद्यते। प्रत्यक्षं हि तदभ्यनुज्ञायते। यथा खल्वालयविज्ञानसम्प्रज्ञातमौलिकार्थप्रतिपत्तिजातिसकलादिबुद्धयस्तन्त्रान्तरपरिभाषाभिस्तत्र तत्रोत्पद्यन्ते, तथाऽन्यत्रापि प्रत्येतव्यम्। न वै खलु गुरुत्रिकादिषु मलादिसामान्यं वस्तुभूतमस्ति। परिभाषानस्तु मलादिरूपेणानुगता बुद्धिर्भवतीति। सेयमसत्यर्थे बुद्धिरिति बुद्ध्यपेक्षता सामान्यविशेषयोरिति। तावेतौ सामान्यविशेषौ परस्परबुद्ध्यपेक्षौ भवतः। द्रव्यत्वं पृथिवीत्वापेक्षया सामान्यं सत्तापेक्षया च विशेषः इति। सत्ता सामान्यं सामान्यं तत्तत्पृथिवीत्वादिकन्त्वान्त्योविशेषइत्यादि यथाविषयं वेदितव्यम्। तत्र सत्ता नाम सतां भावः। सोऽयम्,—

**भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव॥ ४॥**

न विशेषः। भावः खल्वयमनुवृत्तेरेव हेतुर्न व्यावृत्तेरपि। आचार्य्यप्रवृत्तिर्ज्ञापयति, नैव सामान्यादीन्यर्थान्तराणीति। यदि वै भवेयुः, व्यावृत्तिस्तेभ्योभावस्य प्राप्नोतीति। सोऽयं भावः सामान्यमेव। समानोहि सर्व्वेषामर्थानाम्। सन्तोहि सर्व्वेऽर्थाइति। सद्विशेषाणां पुनर्भावः,—

**द्रव्यत्वं गुणत्वं कर्म्मत्वञ्च सामान्यानि विशेषाश्च ॥५॥**

सत्ताऽपेक्षया विशेषाः पृथिवीत्वाद्यपेक्षया सामान्यानि । न वै खलु सद्विशेषाणां सर्व्वे भावाः सामान्यानि विशेषाश्च । किन्तर्हि ?

**अन्यत्रान्त्येभ्योविशेषेभ्यः ॥ ६ ॥**

अन्त्याविशेषास्तत्तत्पृथिव्यादिभावाः । तेभ्योऽन्यत्र ये सद्विशेषाणां द्रव्यादीनां पृथिव्यादीनाञ्च भावाः, तइमे सामान्यानि विशेषाश्च, नत्वन्त्याविशेषाः इति । यथा खल्वन्त्याविशेषाः विशेषाएव, न सामान्यानि, तथाऽन्त्यमपि सामान्यं सामान्यमेव न विशेषः । यस्मात् ।

**सदिति यतो द्रव्यगुणकर्म्मसु सा सत्ता ॥ ७ ॥**

द्रव्यगुणकर्म्मस्वविशेषितौ सदितिप्रत्ययव्यवहारौ यतः, सा सत्ता । कुतश्चैतौ प्रत्ययव्यवहारौ ? अविशेषिताद्भावात् । द्रव्यत्वादयस्तु विशेषितोभावः । द्रव्याणां भावः द्रव्यत्वं गुणानां भावोगुणत्वं कर्म्मणां भावः कर्म्मत्वम् । एवं शेषेषु । द्रव्यादिकन्तु क्रियागुणवदित्याद्युक्तम् ।

**द्रव्यगुणकर्म्मभ्योऽर्थान्तरं सत्ता ॥ ८॥**

अन्योऽर्थोऽर्थान्तरम् । कस्यार्थः ? अर्थइति द्रव्यगुणकर्म्मसु इति वक्ष्यति । सोऽयमर्थः । तस्मादियमप्येष्वेवान्तर्भवति । अर्थः खल्वित यथा न स्यादिति । द्रव्यगुणकर्म्मणामेव काचिद्भवन्ती सत्ता न खल्वपि निर्दिष्टेषु द्रव्यगुणकर्म्मस्वन्तर्भवतीति तेभ्योऽर्थान्तरम् । कस्मात् इयं निर्दिष्टेषु द्रव्यगुणकर्म्मस्वन्तर्भवति ? यस्मात् ।

**गुणकर्म्मसु भावान्न कर्म्म न गुणः ॥ ९ ॥**

सत्ता खल्वियं गुणेषु भवति कर्म्मसु च । तस्मात् नासौ कर्म्म न

खल्वपि गुणः। एतेन द्रव्यं व्याख्यातम्। यः खलु गुणोगुणेषु न भवति नासौ सत्ता। तेभ्यः खल्वर्थान्तरमियमिति। यस्तु गुणोगुणेषु भवति, नाच तस्य प्रतिषेधः। सत्ता नाम गुणोगुणेषु भवति संख्यादिवत्। द्रव्यं खल्वियमाश्रयति नत्वसौ गुणवती न कर्म्मेति। अथापि संख्यादयोगुणाः सत्ता स्युः, गुणकर्म्मसु खल्वेते भवन्तीत्यतआह,—

**सामान्यविशेषाभावेन च ॥ १० ॥**

न कर्म्म न गुणइति प्रकृतम्। सत्तायां तावत् सामान्यविशेषौ न भवतः। भवतस्त्वेतौ संख्यादाविति न संख्यादयः सत्ता।

अथापि रूपादीनां कर्म्मणाञ्चान्यतमः सत्ता, नहि तद्विनाकृतं द्रव्यमिति योमन्यते, तस्यैतत्स्यात्; गुणकर्म्मसु भावान्नकर्म्म न गुणः, सामान्यविशेषाभावेन चेति।

सेयं स्वरूपसती प्रदीपवत्। यथा खल्वन्येऽर्थाः प्रदीपप्रभयोपलभ्यन्ते प्रदीपस्तूपलब्धौ न प्रदीपान्तरमपेक्षते, स्वयैव प्रभयाऽन्यानपि प्रकाशयति स्वयञ्चोपलभ्यते, तथा सत्ताऽपि स्वरूपेणैव सती न सत्ताऽन्तरमपेक्षते। स्वयमेव खल्वसौ भावोन तत्र भावान्तरापेक्षेति। सोऽयं भावः परिभाषावाऽन्योवा, नैवार्थोभिद्यते। साऽपि हि सत्येव नत्वसती स्वयमेव चात्र हेतुरिति। सामान्यविशेषाभावः सामान्यविशेषवत्। यथा हि सामान्यानि द्रव्यत्वादीन्येकबुद्धिनिर्ग्राह्याणि समानानि भवन्त्यपि स्वेनैव रूपेण भवन्ति न तत्र सामान्यान्तरं विशेषान्तरं वाऽस्ति, यथा चानन्ताविशेषाविशेषतया समानाः स्वेन स्वेन रूपेण च विशेषा भवन्तोऽपि न सामान्यान्तरं विशेषान्तरं वाऽपेक्षन्ते। तथा स्वभावात्। तथा सत्ताऽपि न सामान्यविशेषवती। सोऽयमतर्क्योवस्तु-

स्वभावोन खल्वपि पर्य्यनुयोगमर्हतीति । अथापि गुणकर्मणोर्यौ सामा-न्यविशेषौ तावत्र न भवतइति न कर्म न गुण इत्युक्तमिति ।

**अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ ११ ॥**

अनेकेषु द्रव्येषु भवन् भावएव द्रव्यत्वम्। द्रव्यणां भावोहि द्रव्यत्वमिति ।

**सामान्यविशेषाभावेन च ॥ १२ ॥**

द्रव्यगतौ हि सामान्यविशेषौ न तत्र भवतइति। अथापि खलु न द्रव्यत्वे सामान्यविशेषौ भवतः, तथाचायमिति । यथैतत्,

**तथा* गुणेषु भावाद्गुणत्वमुक्तम् ॥ १३ ॥**

**सामान्यविशेषाभावेन च ॥ १४ ॥**

एवम्,

**कर्म्मसु भावात् कर्म्मत्वमुक्तम् ॥ १५ ॥**

**सामान्यविशेषाभावेन च ॥ १६ ॥**

**सदिति लिङ्गाविशेषाद्विशेषाभावाच्चैको भावः॥१७॥**

सदिति प्रत्ययव्यवहारलिङ्गाद्भावोऽवगम्यते । तच्चाविशिष्टम्। न च विशेषे लिङ्गमस्तीत्येकोभावः। सत्तया हि सदिति प्रत्ययव्यवहारौ सत्ता च भावइति ।

इति चन्द्रकान्तीये वैशेषिकभाष्ये प्रथमस्याध्यायस्य

द्वितीयमाह्निकम् ।

समाप्तश्चायं प्रथमोऽध्यायः ।

---

* 'तथा' इत्यंशस्तु न सूत्रान्तर्गतः किन्तु भाष्यांश एव इति प्रतिभाति।

# अथ द्वितीयोऽध्यायः।

प्रथमाह्निकम्।

परीक्षितौ सामान्यविशेषौ। पृथिव्यादिकमिदानीं परीक्ष्यते। तत्र प्रत्यक्षाणां स्थूलानां पृथिव्यादीनां न स्वरूपतः परीक्षाऽपेक्षा। गुणतस्तु,—

**रूपरसगन्धस्पर्शवती पृथिवी॥ १ ॥**

तत्र कृष्णं रूपं पृथिव्याः स्वाभाविकम्। निमित्तव्यपाश्रयमन्यत्। रसोमधुरादिः। गन्धः सुरभिरसुरभिश्च। स्पर्शस्त्वनुष्णाशीतोविलक्षणः। तत्र, गन्धोनाम नैजोगुणः पृथिव्याः। कारणगुणक्रमाच्च रूपादयः। शब्दस्त्वनभिव्यक्तः सन्नपि नोक्तइति। यस्तु सर्व्वेषां समानो गुणः संख्यादिर्नाच तस्योपसंख्यानम्। यस्तु भूतानां विशेषोगुणस्तस्यै तदुपसंख्यानमिति। एवं परत्र। क्रमप्राप्तास्तु,—

**रूपरसस्पर्शवत्यआपोद्रवाः स्निग्धाः॥ २ ॥**

शुक्लं रूपमपां स्वाभाविकं निमित्तव्यपाश्रयमन्यत्। रसोमधुरः। रसान्तरं निमित्तकारितमिति। स्पर्शः शीतः। तत्र रसोनैजः। कारणगुणक्रमात् रूपस्पर्शौ, अन्यस्त्वनभिव्यक्तत्वान्नोक्तइति। द्रवस्नेहावपि नैजावेव गुणौ, कारणगुणक्रमेणान्यत्र तदारम्भकौ न भवतइति पृथगुक्तौ। सेयमननुयोज्या वस्तुशक्तिरिति। एतेन पृथिव्यादीनां खरादयोगुणाव्याख्याताः।

**तेजोरूपस्पर्शवत् ॥ ३ ॥**

रूपं लोहितं तेजसः स्पर्शस्तूष्णः। निमित्तकारिता चान्यथोपलब्धिरिति। तत्र रूपं नैजोगुणः, कारणगुणप्रक्रमादपरः। अन्यस्त्वनभिव्यक्तोनोत्कइति।

**स्पर्शवान् वायुः ॥ ४ ॥**

स्पर्शोनाम वायोर्नैजोगुणोऽभिव्यक्तश्च। अनुष्णाशीतोविलक्षणस्पर्शोवायोः। निमित्तव्यपाश्रयोऽन्यः। शब्दस्तु कारणगुणक्रमादुत्पन्नो नाभिव्यज्यते इति।

**तआकाशे न विद्यन्ते ॥ ५ ॥**

ते रूपादयोगुणाआकाशे न सन्ति। रूपादयोहि नैजास्तेजःप्रभृतीनां, न चैतान्याकाशकारणानि, आकाशाद्धि तेषामुत्पत्तिरिति। अथापि खल्वापोद्रवाः स्निग्धाइत्येतन्नोपपद्यते सर्पिरादीनामपि द्रवत्वादित्यतआह,—

**सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगात् द्रवत्वमद्भिः सामान्यम् ॥ ६ ॥**

अग्निसंयोगात् सर्पिरादीनां यत् द्रवत्वं तत् खल्वद्भिः सामान्यम्। अग्निसंयोगादिति निदर्शनमात्रम्। आतपसंयोगादपि कुत्रचित् द्रवत्वमुत्पद्यते इति।

**त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगात् द्रवत्वमद्भिः सामान्यम् ॥ ७ ॥**

निदर्शनार्थं त्रप्वादिकमुपादीयते। कांस्यादीनामपि द्रवत्वमद्भिः

सामान्यं वेदितव्यम्। द्रवत्वं खल्वेतदपामेव सर्पिरादिगतानां सर्पिरादीनाञ्च प्रभावविशेषान्निमित्तविशेषाच्चाभिव्यज्यते संघातश्चाभिभूयते इति। तदेतत् द्रवत्वमद्भिः सामान्यं पृथिव्याः, स्वाभाविकन्तु द्रवत्वमपामेव न त्वन्यस्यास्तीति।

अत्यन्तानलसंयोगेऽपि तदनुच्छेदात्तेजसः। न वै पृथिव्या एवैतत् सामान्यं किन्तु तेजसोऽपि। सुवर्णे खल्वग्निसंयोगात् द्रवत्वमुत्पद्यते तेजश्च सुवर्णम्। कया युक्त्या? अत्यन्तमनलसंयोगेऽपि न तत्रोत्पन्नं द्रवत्वमुच्छिद्यते इति। प्रसिद्ध्यभावादनपदेशः। नैतावता तेजस्त्वं सुवर्णस्य शक्यमपदेष्टुम्। कस्मात्? प्रसिद्ध्यभावात्। अत्यन्तमनलसंयोगेऽपि द्रवत्वानुच्छेदात् तेजस्त्वं सुवर्णस्य मन्यते। न त्वत्र प्रसिद्धिरस्ति। यथा खल्वत्यन्तानलसंयोगेऽपि उत्पन्नद्रवत्वस्यानुच्छेदात् तदाश्रयोन पृथिवीति पृथिवीवैधर्म्यात् साध्यते। तथैव तदाश्रयोन तेज इति तेजोवैधर्म्यात् शक्यं साधयितुम्। सुवर्णं खलु न किञ्चित् प्रकाशयति न च तमस्युपलभ्यते। तदेतद्वैधर्म्यं तेजसः। अस्त्यन्यद्वैधर्म्यमनुष्णत्वादिकम्। द्रवत्वमप्यपरं वैधर्म्यम्। तेजसि तदनुपलब्धेः। पृथिव्यान्तु सर्पिरादौ दृष्टं द्रवत्वमग्निसंयोगादिति। वैधर्म्येण चात्रोदाहरणं पृथिव्युपादीयते। शक्यञ्च साधर्म्येणापि तस्या उपादानम्। वैधर्म्येण तेजसोऽप्यत्रोपादानमुदाहरणतया न शक्यं प्रतिषेद्धुम्। सोऽयमनपदेशोन लैङ्गिकं प्रयोजयति। किञ्चिच्च कस्यचित् कुत्रचित् साधर्म्यं भवदन्यत्र न भवतीत्यनेकान्तः। कठिना मृत्सा जलसंयोगात् क्लिद्यते। तच्चैतत् क्लेदनं मृत्सायां पृथिव्याः साधर्म्यं भवदश्मनि न भवति। न खल्वश्मा न पृथिवी। तदेवमत्यन्तानलसंयोगेऽपि यत् द्रवत्वं नो-

च्छिद्यते, तदाश्रयोन पृथिवीति नैकस्मिन्नन्ते व्यवतिष्ठते हेतुरिति त्रपुसीसलोहरजतसुवर्णानां जतुमधूच्छिष्टयोरप्येवं तेजस्त्वप्रसङ्गः। तत्रापि सर्वात्मना द्रवत्वस्यानुच्छेदात्। द्रवीभूतानां स्फटिकादीनामपि तदनुच्छेदात् तेजस्त्वमापद्येत। सोऽयं मृदग्निसंयोगे मधूच्छिष्टादावपि द्रवत्वस्यानुच्छेदः, प्रबलेन चाग्निना भूयसा संयोगे सुवर्णस्याप्याश्रयोच्छेदात् द्रवत्वोच्छेद इत्युभयतः सव्यभिचारः। यच्चात्यन्तानलसंयोगेऽपि रूपान्तरं नोत्पद्यते, तदपि पीते वाससि अनेकान्तम्। अपां विरोधस्य समानः। सुवर्णेऽपि खल्वापः करकादिष्विव प्रभावविशेषाद्विद्यन्ते, पृथिवीविशेषास्त्वसौ विशेषो नोपलभ्यते। न चात्रापि प्रसिद्धिरस्ति। अथापि पीतिमगुरुत्वाश्रयस्य पार्थिवस्य द्रुतत्वादनेकान्तम्। प्रत्यक्षं हि तस्य द्रवत्वं न शक्यमपह्नोतुम्। विशेषोवा वक्तव्य इति। तेजसोऽप्यपूर्वएवायं विशेषोऽभ्युपगम्यते। न ह्यसौ सर्वेषु तेजःस्वस्ति। तस्मात् सर्वासु पृथिवीष्वनन्यसौ विशेषः पृथिव्याएव स्यात्। नास्त्यत्र तेजसः साधर्म्यम्। वैधर्म्यन्त्वस्ति। पृथिव्यास्तु साधर्म्याणि गुरुत्वादीनि भूयांस्युपलभ्यन्ते। सोऽयं भूम्ना व्यपदेशस्तन्त्रान्तरसमाचारात् प्रतिपत्तव्यः।

वाष्पभावानिष्पत्तेस्तदनुच्छेदः। वह्निना नुद्यमानाः खल्वापो वाष्पभावमापन्नाऊर्द्ध्वमारोहन्ति। वाष्पभावापत्तौ चापामनवस्थानात् तदाश्रयं द्रवत्वमुच्छिद्यते। सुवर्णे च यत् द्रवत्वमुत्पन्नं नोच्छिद्यते, तत् खलु सुवर्णस्य वाष्पभावानिष्पत्तेः। लघीयसां खल्वपां तेजसा बलवता नोदनेन वाष्पभावनिष्पत्तिः। सुवर्णस्य तु गुरुत्वविशेषोवाष्पभावमवरुणद्धि। तस्मात् द्रवत्वस्यानुच्छेदः। आश्रयोच्छेदाद्धि तदुच्छेदोऽप्सु भवतीति। अथापि खल्वग्निसंयोगोद्रवत्वहेतुन

सएव तस्योच्छेदकः। व्यतिरेकोहि तस्य द्रवत्वोपरमहेतुरिति। प्रत्यक्षञ्चैतन्न शक्यमपह्नोतुम्। सर्पिरादावपि नाग्निसंयोगात् द्रवत्वं नश्यति किन्तु अग्निनोदनात् द्रवाणामेव सर्पिरंशानां वाष्पभावेनापगमात्तदुच्छेदाभिमानइति। बलवता त्वग्निना भूयसा संयोगे वेगातिशय्ये साम्येगुरुत्वप्रतिबन्धस्यावजयात् सुवर्णांशानामप्यपगमेन द्रवत्वोच्छेदो भवति इति।

तैजसं गन्धानुपलब्धेः। न वै खल्वगन्धा पृथिव्यस्ति, न च सुवर्णे गन्धउपलभ्यते, तस्मात् तैजसं सुवर्णं न पार्थिवमिति। तत्राप्यवश्यम्भावादहेतुः। तेजस्त्वेऽपि सुवर्णस्यावश्यं तत्र पृथिव्या भवितव्यम् तया हि गुरुत्वादिकमस्य क्रियते। न च तत्रावश्यं भवन्त्याः पृथिव्या गन्धउपलभ्यते। नचागन्धा पृथिव्यस्ति। तस्माद्गन्धानुपलब्धेरित्यहेतुः। अश्मकाचादिगन्धानुपलब्धिवत्तदनुपलब्धिः। यथा पार्थिवस्याश्मनः काचादेश्च गन्धोनोपलभ्यते, स हि तेष्वभिभूयते। तथा पार्थिवस्य सतः सुवर्णस्यापि गन्धोनोपलभ्यते इति। तेजस्त्वे तु तमसि तद्रूपोपलब्धिप्रसङ्गः। पार्थिवरूपेणाभिभवाद्धि तदनुपपलब्धिं मन्यते अभिभवश्च बलवत्सजातीयग्रहणकृतमग्रहणमिति। तमसि चैतन्नोपपद्यते। बलवत्सजातीयसंबन्धमात्रमभिभवइति चेद्धेतुवचनम् रात्रावप्युल्काप्रकाशस्याग्रहणप्रसङ्गश्च। तदानीमपि सौरेण तेजसा संसर्गस्याविशेषात्। सौरेण तेजसा खल्विन्द्रादीनां रात्रौ प्रकाशइति। एतेन रजतादिकं व्याख्यातम्।

यस्तु दैवतरेतसः परिणतिरेतदिति स्मार्त्ताल्लिङ्गात्तेजस्त्वं मन्यते। तस्य रुद्राश्रुणः परिणतीरजतमिति नैगमाल्लिङ्गात् करकादिवज्ज

त्वप्रसङ्गः। प्राप्तिरहितमन्यार्थदर्शनमसाधकमन्यत्रापि समानम्।
तसोऽपि तेजस्त्वं न प्रमाणतउपलभ्यते इति। एतेन अग्नेरपत्यं
प्रथमं हिरण्यमिति नैगममपि लिङ्गं व्याख्यातं वेदितव्यम्। तस्य चाग्ने
रापइति नैगमाल्लिङ्गान्तरादपामपि तेजस्त्वं प्रसज्येत। यस्तु सर्पिरा-
दीनां पृथिवीत्वं त्रप्वादीनाञ्च तेजस्त्वमिति प्रतिजानीते, तस्यैतत्
पृथक् सूत्रणमाचार्य्यस्य। यथा हि सर्पिरादीनामग्निसंयोगात् द्रव-
त्वमद्भिः सामान्यं पार्थिवानां, तथा त्रप्वादीनामपि द्रवत्वमग्नि-
संयोगादद्भिः सामान्यम्। तस्मात्तदपि पृथिवी भवितुमर्हति। दृष्टं
हि पार्थिवस्य सर्पिरादेरग्निसंयोगात् द्रवत्वमद्भिः सामान्यम्, तथा
चेदमिति। यस्यापि तेजस्त्वं, तस्यापि सामान्यमेव द्रवत्वमद्भिरिति।

पृथिव्यप्तेजांसि प्रत्यक्षाणि द्रव्याणि। नैतेषु स्वरूपतः परीक्षा प्रव-
र्त्तते। वायुस्तु द्रव्यं स्वरूपतोऽपि परीक्षणीयम्। श्रूयते खल्वत्र
विप्रतिपत्तिः। अतोलिङ्गेनैनं साधयितुं दृष्टं तावल्लिङ्गमुदाह्रियते निद-
र्शनार्थम्। दृष्टसामान्याद्धि सिद्धिरदृष्टस्येति।

## विषाणी ककुद्मान् प्रान्तेबालधिः सास्नावानिति गोत्वे दृष्टं लिङ्गम्॥ ७॥

विषाणेन गोत्वमनुमीयते, ककुदा, प्रान्तेबालधिना, सास्नया चेति
विषाणादयोगोत्वस्यानुमितौ दृष्टं लिङ्गम्। विलक्षणं खलु विषाणं
गोत्वे लिङ्गं विलक्षणइव धूमोवह्नौ। प्रान्ते यत्राधीयन्ते बालाः, सोऽयं
प्रान्तेबालधिः पुच्छविशेषोगोत्वे लिङ्गमिति। एवन्तावत् लिङ्गमनु-
मितौ हेतुरित्युदाहृत्य वायोरनुमापकं लिङ्गमुपादीयते,—

स्पर्शश्च वायोः॥ ८॥

अनुमितौ लिङ्गमिति प्रकृतम्। शब्दधृतिकम्पाश्चेति चार्थः। योऽयं विलक्षणः स्पर्शोऽनुभूयते, स गुणत्वात् किञ्चिद्द्रव्यमाश्रयति। गुणारूपादयः किञ्चित् द्रव्यमाश्रयन्तोदृष्टाः, गुणश्चायं स्पर्शइति तदाश्रयोद्रव्यमनुमीयते। कोष्ठ्यस्य वायोर्महता प्रयत्नेन प्रेरितस्य कण्ठताल्वादिप्रतिघातोभवति, प्रतिहन्यमानोवायुराकाशे शब्दमुत्पादयति। बलवता प्रयत्नेन दुन्दुभिरभिहन्यमानः तत्स्थस्य वायोः प्रतिघातेनाकाशे शब्दमुत्पादयति। ऊर्द्ध्वस्थस्य गुरुद्रव्यस्याधःपतनेन तत्स्थवायोः प्रतिघातादाकाशे शब्दस्योत्पत्तिरिति। प्रेरणादभिघाताच्च वायौ गतिकर्मविशेषः प्रादुर्भवति। ततोवेगउत्पद्यते। यावच्च वेगकारितोवीचीतरङ्गवद्गतिकर्मविशेषः प्रादुर्भवति, तावच्छब्दसन्तानउत्पद्यते। वेगोपरमे चोपरमस्तस्य भवति। अतएवानुवातं दूरस्थस्य शब्दोपलब्धिर्वेगतारतम्याच्च शब्दतारतम्यमिति। मूले चास्य प्रयत्नोगुरुद्रव्यप्रतिघातो वा। अतः सर्वदा गतिमानपि वायुर्न सर्वदा शब्दोत्पत्तौ निमित्तं भवति।

यत्र दृष्टनिमित्तव्यतिरेकेण पर्णादीनां शब्दसन्तानस्तेन तन्निमित्तं वायुरनुमीयते। स्पर्शवद्वेगवद्द्रव्याभिघातकारितोहि सः। दण्डाभिघातात् खलु भेरीशब्दउत्पद्यमानोदृष्टः, तथाचायमिति। वायुप्रेरितानां तृणादीनां मेघादीनाञ्च नभसि धृत्या वायोरनुमानं भवति। स्पर्शवद्वेगवद्द्रव्यसंयोगनिमित्ता ह्येयं पयसि नौकादौ दृष्टेति। शाखादिकम्पेन च तन्निमित्तं वायुरनुमीयते। स्रोतसा हन्यमानस्य हि वेतसवनस्य कम्पोदृष्टइति।

अथ मन्येत, योऽयं स्पर्शः स दृष्टानामेव पृथिव्यप्तेजसां कस्यचित् स्यादिति, तच्च नैवं मन्तव्यमित्याह,—

## न च दृष्टानां स्पर्शइत्यदृष्टलिङ्गोवायुः ॥ ९ ॥

न वै खल्वयं स्पर्शोदृष्टानां पृथिव्यप्तेजसां भवितुमर्हति। कस्मात्? विलक्षणत्वात्। पृथिव्यादिस्पर्शविलक्षणो ह्ययमिति। रूपशैत्यौष्ण्यानाञ्चा-नुपलब्धेः। स्पर्शमात्रमुपलभ्यते, न रूपम्। स्पर्शोऽपि न शीतोन खल्वप्युष्णः, किन्तु विलक्षणोनिपुणसंवेद्यइति। पूर्व्वकाये चोपलब्धेः। पूर्वकाये चासौ विलक्षणः स्पर्शउपलभ्यते, न तत्र पृथिव्यादिकमस्तीति न दृष्टानामयं स्पर्शः। तस्माददृष्टलिङ्गोवायुः। नह्यस्य लिङ्गं स्पर्शो दृश्यते इति। सोऽयं वायुः,—

## अद्रव्यवत्त्वेन द्रव्यम् ॥ १० ॥

द्रव्यं यन्न भवति तदद्रव्यम्। अद्रव्यवांश्च वायुः तस्मात् द्रव्यम्। वायौ खल्वद्रव्यं स्पर्शोवर्त्तते इति। अथापि खल्वद्रव्यं भावोद्रव्यगुणकर्मसु वर्त्तते इति गुणः कर्म च द्रव्यं स्यादित्यतआह,—

## क्रियावत्त्वाद्गुणवत्त्वाच्च ॥ ११ ॥

न ब्रूमोऽद्रव्यं भावोऽस्मिन् वर्त्तते इति वायुर्द्रव्यमिति। किन्त्वद्रव्यं क्रिया गुणश्चास्मिन् वर्त्तते इति वायुर्द्रव्यमिति। क्रियागुणाभ्यां हि द्रव्यं लक्ष्यते न भावेन। न वै क्रिया गुणश्च गुणेषु वर्त्तते कर्मसु वेति। सत्यपि भावस्य संख्यादेश्च गुणत्वे द्रव्यगुणकर्मवृत्तित्वे च विशेषविवक्षया वैजा-त्यादुच्यते, क्रियावत्वाद्गुणवत्त्वाच्चेति।

## अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ १२ ॥

स्थूलस्य वायोरुपादानं सूक्ष्मोवायुर्न द्रव्यवानिति नित्यत्व मस्योक्तं

भवतीति सूत्राणां पृथिव्यादीनां साधारणं वचनम्। अथापि प्रागुत्पत्तेरुत्पन्नः स्थूलोवायुरवान्तरसर्गप्रलयेष्ववस्थानात् न पुनरिदानीं कारणद्रव्यादुत्पद्यते इति व्यवहारदशायामद्रव्यत्वात् नित्यत्वमस्योक्तं भवति।

नित्यस्य सतोऽनुपलब्धिनिमित्तानुपपत्तेः सर्वदोपलब्धिप्रसङ्गः। न वै खलु सर्वदा वायुरुपलभ्यते। न च नित्यस्य सतोवायोरनुपलब्धिनिमित्तमुपपद्यते। यदि वै उपपद्येत, तस्योपलब्धिः स्यात्। न ह्युपलभ्यते। तस्मात् सर्वदोपलब्धिप्रसङ्गः। ततोयेयं कादाचित्की वायोरुपलब्धिः सा नोपपद्यते। अनित्यस्य खल्वसतोऽनुपलब्धिरुपपद्यते इति। चलत्वादहेतुः। चलोहि वायुर्नैकत्र चिरमवतिष्ठते देशाद्देशान्तरमपसर्पति। यदा खल्वयमुपलब्धुः सविधं प्रत्यासीदति, तदोपलभ्यते। यदा त्वपसरति, न तदोपलभ्यते इति। यश्चान्योवायुराशिरभितः पृथिवीं वर्त्तते, येनायं लोकः प्राणिति, स खलु स्पृष्टोऽपि सर्वकालमल्पत्वान्नोपलभ्यते। तस्मात् नित्यस्य सतोऽनुपलब्धिनिमित्तानुपपत्तेरित्यहेतुः।

न चैतन्मन्तव्यं नित्यस्यैकस्यायं वायुराकाशवत्, तत्रैवंसत्येकस्यापसर्पणमन्यस्यचोपसर्पणमित्येतन्नोपपद्यते इति। अनेके हि वायवः। कया युक्त्या? उच्चावचोपलब्धेः। अनेकप्रकारः खलु वायुरुपलभ्यते मन्दस्तीव्रोमध्यमश्चातो नायमेकोभवति। अथापि खल्वेतत्,—

## वायोर्वायुसंमूर्च्छनं नानात्वलिङ्गम्॥ १३॥

वायुसंमूर्च्छनं नाम विरुद्धदिक्क्रिययोर्वेगवतोर्वाय्वोः सन्निपातः। या चेयं वायुप्रेरितानां तृणादीनामूर्द्ध्वगतिरुपलभ्यते, सा खलु वायु

संमूर्च्छनादुत्पद्यते । संमूर्च्छितोवै वायुरूर्द्ध्वं गच्छन् तृणादिकमप्यूर्द्ध्वं गमयति । विरुद्धदिक्क्रिययोर्नदीस्रोतसोः संमूर्च्छनादपां तत्संसृष्टानां तृणादीनाञ्चोर्द्ध्वगमनं दृष्टम्, तथाचैतदिति । तदेवं तृणादीनामूर्द्ध्वं गमनात् तन्निमित्तं वायोः संमूर्च्छनमनुमीयते, ततोवायुनानात्वमिति ।

न वै खलु भोः स्पर्शादिभिर्लिङ्गैर्वायुरनुमीयते । द्रव्यं हि किञ्चिदेतैस्तदाश्रयोऽनुमीयते । न च यदनुमीयते, वायुर्नाम तद्भवति । तच, यादृगिदं भवति उपलब्धिलिङ्गात् योऽनुमीयते स वायुर्भवति, तादृगेतद्भवति स्पर्शादिभिर्लिङ्गैर्योऽनुमीयते स वायुरिति । न च वायुर्नाम द्रव्यं प्रत्यक्षम् । अदृष्टलिङ्गोहि स इत्याह,—

**वायुसन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते॥१४॥**

यदा वै वायुः सन्निकृष्यते, तदापि नैवासौ प्रत्यक्षेणोपलभ्यते। तस्मात् तत्र दृष्टं लिङ्गमस्ति । न चात्र लिङ्गलिङ्गिभावः प्रत्यक्षेण शक्यो- गृहीतुम् । यत्र लिङ्गं लिङ्गी चेत्येतत् द्वयं प्रत्यक्षं, तत्रैतत्स्यात् । नत्वे- तदस्ति । कस्मात्? सत्यपि वायुसन्निकर्षे वायोः प्रत्यक्षाभावात् । तस्माद- दृष्टलिङ्गोऽयमिति । अथ मन्येत, कार्य्येण कारणानुमानवदेतत्स्यात् । कार्य्यं हि स्पर्शः कारणञ्चास्य वायुरिति । पार्थिवेन चोदञ्चनादिना पार्थिवस्य कारणस्यानुमानं दृष्टमिति । तच नैवं भवति । द्रव्यं द्रव्य- मारभमाणं सजातीयमारभते इति पार्थिवेन पार्थिवस्यानुमानमुपपद्यते। द्रव्यगुणयोस्तु नैवम् । गुणेन हि स्पर्शेन तदाश्रयो द्रव्यमनुमीयते इति।

**सामान्यतोदृष्टाच्चाविशेषः ॥ १५ ॥**

सामान्यतोदृष्टाच्चानुमानान्न विशेषः सिध्यति । स्पर्शेन हि तदा-

अयस्य द्रव्यस्यानुमानं भवति न वायोः। त्रिविधं खल्वनुमानमुक्तं पूर्ववत् शेषवत् सामान्यतोदृष्टञ्चेति। यत्र कारणेन कार्य्यमनुमीयते मेघोन्नत्या भविष्यति वृष्टिरिति, तत् पूर्व्ववदनुमानम्। यत्र कार्य्येण कारणमनुमीयते पूर्वोदकविपरीतोदकेन नद्याः भूता वृष्टिरिति, तत् शेषवदनुमानम्। अथापि खलु प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाने संप्रत्ययः शेषः, ततः शेषवदिति। गुणस्य स्पर्शस्य द्रव्याश्रितत्वे सिद्धे प्रसक्तस्य पृथिव्याद्याश्रितत्वस्य प्रतिषेधे गुणकर्मणोरप्रसङ्गाच्छिष्यमाने द्रव्यान्तरे वायौ संप्रत्ययइति। सामान्यतोदृष्टं खल्वेकत्र दृष्टयोरेकस्य दर्शनादन्यस्यानुमानम्। यथा देवदत्तादिदेशान्तरसंबन्धोव्रज्यापूर्वकोदृष्टः, ततश्चन्द्रार्कयोरपि देशान्तरसंबन्धोव्रज्यापूर्वकइत्यनुमानमिति। तत्रैवं सति, पूर्ववतः शेषवतश्चेति चार्थोमन्तव्यः। अथापि खलु यत्र साध्यसाधनयोः संबन्धग्रहणाद्भवत्यनुमानं पूर्व्ववन्नाम तत्। यत्र तद्यतिरेकयोस्तत् शेषवत्। यत्र चोभयथा प्रवृत्तिस्तत् सामान्यतोदृष्टमिति। अथापि खल्वाचार्य्यप्रवृत्तिर्ज्ञापयति द्विविधमनुमानं, क्वचिद्विशेषतोदृष्टं क्वचिच्च सामान्यतोदृष्टमिति। यत्र विशेषतोदृष्टं लिङ्गं भवति लिङ्गं लिङ्गी चेत्येतत् द्वयं यत्र प्रत्यक्षं, तत्र विशेषतोभवत्यनुमानम्। सामान्यतोदृष्टाच्च न गम्यते विशेषः।

तस्मादागमिकम्॥१६॥

वायुरेतद्द्रव्यमित्येतदागमिकं मन्तव्यमित्यागमस्य स्वतन्त्रप्रमाणभावमनभ्युपगच्छतोन किञ्चित् समाधानमिति प्रत्यवतिष्ठमानमुपदर्शन्निवेदमाह,—

## संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥ १७ ॥

तुशब्दात् पक्षोव्यावर्त्त्यते। स्पर्शेन तदाश्रयस्य द्रव्यस्यानुमाने न विप्रतिपत्तिः । किन्तु तद्द्रव्यं वाय्वभिधानमन्याभिधानं वेति संज्ञायां विप्रतिपत्तिः। संज्ञा त्वस्माकं न कर्म। अस्मत्तोविलक्षणानां खल्वेतल्लिङ्गम्। परोक्षैर वस्तुनामस्मादृशानां कर्म। संज्ञा त्वस्मद्विलक्षणैर्लौकिकैरपि क्रियते। इदमस्ति नास्तीति परीक्षकैर्निर्णीतेऽर्थे लौकिकैरपि बह्व्यः संज्ञास्तत्र सन्निवेश्यन्ते। असाधारणोहि वस्तुधर्मो व्यपदेशनिमित्तम्। तन्निर्णयस्य न परीक्षकेभ्योऽन्यस्मात्। संज्ञा त्वन्यस्मादपीति। यच्चैतत् स्पर्शादिभिर्लिङ्गैरनुमितं द्रव्यं, तत् खलु वातीति वायुः स्पृश्यते इति स्पर्शनः प्राणित्यनेनेति प्राणः अशितपीतादिसमीकरणात् समानइत्यादि यथाविषयमाख्यायते। अथापि खल्वेतत् संज्ञाकर्म अस्माकमस्मद्विशिष्टानाञ्च लिङ्गमिति। अथापि खल्वस्मद्विशिष्टानां योगिनां लिङ्गमिति लोकसामान्यमिवात्मजि मन्यते इति लीयं भगवतः सूत्रकारस्य। अथापि खल्वियं संज्ञा अस्मद्विशिष्टैरपि क्रियते इति कुतएतत्प्रतिपत्तव्यम्?

## प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः ॥ १८ ॥

प्रत्यक्षं खल्वप्यतनाऽपि संज्ञां कर्तुं प्रवर्त्तन्ते, किमत्रानुमानेन। प्रत्यक्षपूर्वकं खल्वनुमानमिति पूर्वाऽप्येवमिति शक्यमनुमातुम्। दृश्यते चैवमिति। अथापि खल्वसाधारणैर्वस्तुधर्मैः संज्ञाकर्मणः प्रवृत्तिरिति प्रत्यक्षमुपलभ्यते तच्च शक्यमस्मद्विशिष्टैः कर्त्तुमिति। अवसिता वायुपरीक्षा। आकाशमिदानीं परीक्ष्यते।

## निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥ १९ ॥

आकाशोह्यवकाशं ददाति। ततोनिष्क्रामति प्रविशति च। यत्र चावकाशोनास्ति न तत्रैते भवतः। तस्मादनुमीयते अस्त्याकाशं यदवकाशं ददातीति। अस्य प्रत्यवस्थानम्।

## तदलिङ्गमेकद्रव्यत्वात् कर्मणः ॥ २० ॥

निष्क्रमणं प्रवेशनञ्चेति द्वयं न लिङ्गमाकाशस्य। कस्मात्? एकद्रव्यत्वात् कर्मणः। कर्म खल्वेतत् निष्क्रमणं प्रवेशनञ्चैकस्मिन् द्रव्ये समवैति; यन्निष्क्रामति प्रविशति च, न त्वेतदाकाशेऽपि समवैतीति नैतदाकालस्य लिङ्गम्। इतश्चैतदेवं प्रतिपत्तव्यम्।

## कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥ २१ ॥

यानि कारणान्तराण्यनुकल्प्यन्ते कार्य्यान्तरेषु, तेषां वैधर्म्याच्च तदलिङ्गमाकाशस्य। नियतपूर्वभावोहि कारणानां धर्मः। सर्वकालञ्चाकाशं विद्यते, न तस्य पूर्वभावनियमः शक्योनिश्चेतुम्। न चैतस्य व्यतिरेकोऽस्ति। अन्वयव्यतिरेकाभ्यां हि कारणभावावगतिः। यदि वै कारणमाकाशं भवेत्, ततोव्यतिरेकाभावात् सर्वदा कर्मोत्पद्येत। असर्वगतत्वं वा आकाशस्य स्यात्। तत्र यादृगिदं भवति द्रव्यं लिङ्गमाकाशस्य, तादृगेतद्भवति निष्क्रमणं प्रवेशनञ्च लिङ्गमाकाशस्येति। अस्योत्तरम्।

## संयोगादभावः कर्मणः ॥ २२ ॥

तदलिङ्गमिति न भवति प्रतिषेधः। कस्मात्? कर्मणः संयोगात्।

र्म हि क्रिया। सा च धात्वर्थः फलं व्यापारश्चेति द्वयी। तत्र, व्या-
ारोयन्निष्क्रामति प्रविशति च तस्मिन् समवैति। फलन्तु संयोग-
ाकाशेऽपीति भवति लिङ्गमाकाशस्य। अथापि खल्वाकाशः सर्व
ातोऽपि न सर्वत्र कर्मोत्पत्तिनिमित्तम्। मूर्त्तिमता द्रव्येण संयोगात्
ल्ववकाशस्यावरोधोभवतीति न तत्र कर्मोत्पद्यते। यस्तु सर्वदा सतो
यतिरेकाभावात् पूर्वभावनियमोन शक्योनिश्चेतुमिति प्रतिजानीते,
स्यात्मनोऽपि न कारणभावः प्राप्नोति। अवकाशकारिता कर्मनि-
ष्पत्तिरिति प्रत्यक्षमेतत्। ततोयथा मूर्त्तसंयोगाभावस्तत्र हेतुरेव
ाकाशोऽप्यवकाशनिमित्तं हेतुर्भवति विशेषोवा वक्तव्यः। न त्वसावस्ति।
स्मादुभयं हेतुरिति। अवकाशेन हि सोऽनुमीयते। यश्चायमुप-
भ्यते शब्दः, सोऽप्याकाशस्य लिङ्गं भवति। कया युक्त्या ? यस्मात्।

## कारणगुणपूर्वकः कार्य्यगुणोदृष्टः ॥ २३ ॥

पृथिव्यादीनां रूपादयोगुणाः कारणगुणपूर्वकादृश्यन्ते। शुक्लेभ्य-
न्तुभ्यः शुक्लः पटउत्पद्यते, कृष्णेभ्यः कृष्णोलोहितेभ्योलोहित-
त्यादियथाविषयं वेदितव्यम्।

## कार्य्यान्तराप्रादुर्भावाच्च ॥ २४ ॥

कार्य्यगुणः कारणगुणपूर्वकइति प्रकृतम्। न वै खलु कार्य्यान्तरं
ारणगुणाद्विजातीयोगुणः कार्य्ये प्रादुर्भवति। न शुक्लेभ्यस्तन्तुभ्य
त्पन्नस्य वाससः कृष्णं रूपमुत्पद्यते, न कृष्णेभ्योरक्तं, न रक्तेभ्यः
ुक्लमिति। तदेवं कार्य्यान्तराप्रादुर्भावाच्च प्रतिपद्यामहे कारणगुण-
ूर्वकः कार्य्यगुणइति। तदेवमुपलभ्यमानः शब्दोऽपि कारणगुणपूर्वक
ुवेति भवति प्रतिपत्तिः। सोऽयम्,

शब्दः स्पर्शवतामगुणः ॥ २५ ॥

स्पर्शवतां पृथिव्यप्तेजोवायूनां गुणो न भवति। कस्मात्? गुणान्तरप्रादुर्भावाभावात्। न हि पृथिव्यादीनां कारणेषु शब्दोविद्यते इति। कारणक्रमादिति चेन्नाप्रत्याख्यानात्। अथ मन्येत, सूक्ष्मेष्वपि पृथिव्यादिषु कारणक्रमेण शब्दोविद्यते, आकाशाद्वायोर्वायोरग्नेरग्नेरपामद्भ्यः पृथिव्याश्चोत्पत्तेरिति। तच्च नैवं मन्तव्यम्। कस्मात्? अप्रत्याख्यानात्। न खल्वेवं शब्दस्य मूलकारणमाकाशं शक्यं प्रत्याख्यातुम्। वाय्वादिषु शब्दानुपपत्तेः। आकाशकारितोहि तेषु शब्दः इति। तारमन्दभावोपलब्धेश्च। एकस्मिन्नेवाश्रये तारमन्दादिभावेन शब्दउपलभ्यते। पृथिव्यादिविशेषगुणास्तु रूपादयोनैवम्। तस्मान्न पृथिव्यादिविशेषगुणः शब्दः। न च वायोरयावद्द्रव्यभावात्। अस्तु वायुगुणः शब्दः, वायुकारिता हि शब्दोत्पत्तिरिति। एवं सति स्पर्शवत् शब्दोऽपि यावत् द्रव्यं भवेत्। न च भवति। कथं ज्ञायते? प्रतिवातं दूरादनुपलब्धेः। यदि वै भवेत्, येयं वायोः प्रातिकूल्येन वर्त्तमानस्योपलब्धुर्दूरात् शब्दस्यानुपलब्धिः, सा नोपपद्यते। स्पर्शवदसावपि ह्युपलभ्येत। न चोपलभ्यते। तस्मादनुमीयते न यावत् द्रव्यं शब्दोभवतीति। अथापि खलु तृतीयक्षणे प्रणाशात् न यावत् द्रव्यं भवति शब्दइति। तस्मान्न वायुगुणइति। वायुविशेषगुणोहि स्पर्शोयावत् द्रव्यं भवतीति। एकैकविशेषगुणाश्च पृथिव्यादयइति शब्दविशेषगुणस्य द्रव्यस्यानुमानं भवति। क्रमाद्गुणोपचयदर्शनाच्च द्विगुणोऽपि वायुरुपचितगुणइति भवति प्रतिपत्तिरतोऽनुपचितगुणस्याकाशस्यानुमानमिति।

**परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ २६ ॥**

परत्र खल्वयं शब्दः समवैति न त्वात्मनि । श्रूयते हि शब्दो न त्वात्मगुणवदुपलभ्यते । यदि वै समवेयात्, बधिरोऽप्युपलभेत । सुखीतिवत् शब्दवानिति च प्रतिपद्येत । जडश्चैवमात्मा स्यात् । एकैकवहिरिन्द्रियग्राह्यविशेषगुणवत् पृथिव्यादि द्रव्यं जड़ं दृष्टम् । तथाचायमिति । तस्मान्नात्मगुणः शब्दः । न च मनोगुणः । प्रत्यचत्वात् । मनसस्तु गुणान प्रत्यचाः । तस्य महत्त्वाभावात् । प्रत्यचस्य शब्दइति । सुखादीनान्त्वात्मनि भासमानानां प्रत्यचेणोपलब्धिरिति । तस्मात्

**परिशेषाल्लिङ्गमाकाशस्य ॥ २७ ॥**

पारिशेष्यात् शब्देनाकाशमनुमीयते । गुणः शब्दः किञ्चित् द्रव्यमाश्रयति, यच्चायमाश्रयति तदाकाशमिति । आचार्यप्रवृत्तिर्ज्ञापयति कालोदिक् चाकाशमेवति । यदयमन्येषां व्यतिरेकभाकाशे साधयति न कालदिशोः, अथापि स्पर्शवदात्ममनसां न गुणइति प्रसाध्य पारिशेष्याच्छब्देन तदाश्रयस्याकाशस्यानुमानं मन्यते । तदेवमनुमितस्याकाशस्य,

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २८ ॥**

क्रियावत्त्वाद्गुणवत्त्वाच्च द्रव्यत्वमद्रव्यत्वेन च नित्यत्वमिति ।

**तत्त्वं भावेन ॥ २९ ॥**

तस्य भावस्तत्त्वं भावेन व्याख्यातम् । भावएव विशिष्यमाणस्तत्त्व-

मिति। अथापि खल्वेकमाकाशं भाववदुपाधिभेदाद्भिद्यते इति। कुतः पुनरेकमाकाशमिति प्रतिपत्तिः ?

**शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ॥ ३० ॥**

एकत्वे चाकाशस्य,

**तदनुविधानादेकपृथक्त्वञ्चेति ॥ ३१ ॥**

एकपृथक्त्वं खल्वेकत्वमनुविधत्ते इत्येकपृथक्त्वञ्च सिध्यतीति ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये द्वितीयस्याध्यायस्याद्य-
माह्निकम् ॥

---

परीक्षितानि संक्षेपेण गुणतः पृथिव्यप्तेजांसि। परीक्षितश्चाप्रत्यक्षो-वायुराकाशश्च। पृथिव्यप्तेजसां लक्षणानि गन्धादय इदानीं परीक्ष्यन्ते। तत्र गन्धस्तावत् परीक्ष्यते। किमयमुपलभ्यमानोगन्धः पृथिव्या एव विशेषगुणआहोस्वित् वाय्वादेरपीति। कुतः संशयः? उपलब्धेरुभयथोप-पत्तेः। येयं वायावप्सु च गन्धस्योपलब्धिः—सुरभिः समीरणोदुर्गन्ध-मुदकमिति, सा किमुपाधिनिमित्ता स्वाभाविकी वेति नोपलभ्यते विशेषः। यदि स्वाभाविकोऽपां वायोश्च गन्धः, यदि वा सूक्ष्मपृथिवी-भागोपाधिनिमित्तः, उभयथाऽपि उपलब्धिरुपपद्यते। यस्तु पृथिव्या-संहन्यमानेषु वाय्वादिषु गन्धः, न तस्योपलब्धिरस्ति सूक्ष्मत्वात्। यस्तूप-लभ्यते स्थूलोगन्धस्तत्रायं विमर्शइति। उपाधिनिमित्तेयं पृथिव्या गन्ध-स्याप्सु वायौ चोपलब्धिः। कस्मात्? तदनुविधानादुपलब्धेः। यासु खल्वप्सु दुर्गन्धस्योपलब्धिस्तास्वेव प्रयत्नपरिशुद्धासु दुर्गन्धवत्पार्थिवां

पगमात् न खल्वपि दुर्गन्धउपलभ्यते। पुष्पितमाराममावर्ज्य वाति वायावनुवातस्थः सुरभिं गन्धमुपलभते न प्रतिवातस्थः। सेयमुपलब्धिः पार्थिवांशमनुविधत्ते। तदनुविधानादनुमीयते पार्थिवोपाधिनिमित्ते-यमप्सु वायौ च गन्धस्योपलब्धिरिति। तत्र निदर्शनम्।

**पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ॥१॥**

वस्त्रे तावत् पुष्पगन्धोनोपलभ्यते। पुष्पवस्त्रयोः सन्निकर्षे सति तु पुष्पगन्धादपरोगन्धोन खल्वपि वस्त्रे प्रादुर्भवति, पुष्पेन संसृज्यमाने वाससि पुष्पगन्धएवोपलभ्यते न गन्धान्तरम्। सोऽयं पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावोवस्त्रे पुष्पगन्धाभावस्य लिङ्गम्। न खल्वसति पुष्पवस्त्रयोः सन्निकर्षे वाससि पुष्पगन्धस्योपलब्धिर्भवति, सति च सन्निकर्षे पुष्पगन्धस्यैवोपलब्धिर्न गन्धान्तरस्य। तस्मादनुमीयते वाससि पुष्पगन्धोनास्ति पुष्पोपाधिनिमित्ता तु तत्र तदुपलब्धि-रिति। या च परस्तादुपलब्धिः साऽप्युपाधिनिमित्ता प्रदीपवत्। यथा प्रदीपस्य सूक्ष्माअवयवाः परितः प्रसर्पन्तोवेश्मनोऽभ्यन्तरं प्रकाशयन्ति, तथा पुष्पस्य सूक्ष्मा अंशावाससि संसृष्टास्तत्र पुष्पगन्धोपलब्धिनिमित्त मिति। अप्रचयान्नेति चेन्नोपादानमात्रापगमात्। यदि पुष्पस्य सूक्ष्मा-ंशा अपगच्छन्तोवाससि पुष्पगन्धोपलब्धौ निमित्तं भवति, सर्वेषामंशा-नामपगमात् कदाचित् प्रचीयेत पुष्पं, न च प्रचीयते, तस्मान्नैव-ेति। तन्न नैवम्। कस्मात्? उपादानमात्रापगमात्। कश्चित् खल्वंं पुष्पस्य उपलभ्यमानगन्धोपादानं न सर्व्वः। पर्य्युषितेष्वनुपलब्धेः।

न खल्वपि पर्य्युषितेषु पुष्पेषु गन्धउपलभ्यते। कथञ्च नोपलभ्यते? तदुपादानापगमात्। योवै खल्वंशः पुष्पस्य उपलभ्यमानगन्धोपादानं, सोऽयमंशोवायुना नूयमानस्तस्मादपगच्छति अन्यस्त्वांशोऽवतिष्ठते इति न द्रव्यस्य प्रत्ययोभवति। सोऽयं संयोगविशेषावस्थितः पुष्पांशो वायुना न खल्वपि शक्योनेतुमिति। एतेन सर्व्वे भावाव्याख्याताः। अथापि खलु तन्तुषु वस्त्रोपादानेषु न पुष्पगन्धोऽस्तीति न जातुचिद्वस्त्रे पुष्पगन्धः प्रादुर्भवितुमर्हति स्वाभाविकः। गुणान्तरप्रादुर्भावाभावात्। सोऽयं गुणान्तराप्रादुर्भावः सत्यपि पुष्पवस्त्रयोः सन्निकर्षे वस्त्रे स्वाभाविकस्य पुष्पगन्धस्याभावे लिङ्गम्। यथाऽऽरामस्थपुष्पगन्धो न वाससीति। तदेवम्,

**व्यवस्थितः पृथिव्यां गन्धः ॥ २ ॥**

पृथिव्यामेव स्वाभाविकोगन्धोऽन्यत्र त्ववादावुपाधिनिमित्तइति।

**एतेनोष्णता व्याख्याता ॥ ३ ॥**

उष्णतापि क्वचिदुपाधितिमित्ता क्वचिच्च स्वाभाविकी भवति। तत्र पृथिव्यामप्सु वायौ च योष्णतोपलभ्यते, उपाधिनिमित्तेयम्। स्वाभाविकी तु,

**तेजसउष्णता ॥ ४ ॥**

या चेयं शिलाशकलादिषु शैत्योपलब्धिरुपाधिनिमित्ता सा इति,

**अप्सु शीतता ॥ ५ ॥**

व्यवस्थिता भवति। अप्तेजसोर्व्युत्क्रमेणाचार्य्यप्रवृत्तिर्ज्ञापयति रूपा-

गुणान्तरमप्येवं स्वाभाविकमौपाधिकञ्च प्रतिपत्तव्यमिति । रूपादयो-गाः पृथिव्यादीनां लक्षणानि, इमानि तु,—

**अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ॥ ६ ॥**

यमपेक्ष्य यस्योत्पत्तिरल्पेन तपनपरिस्पन्देनान्तर्धीयते तमपेक्ष्य सोऽपरः। अपरस्यापेक्ष्यान्यः परइति प्रत्यनीकभावाल्लभ्यते। तत्र तत् द्रव्यं, योऽयमपरस्तेन तपनेन च संसृज्यते अपरस्य तपनक्रियया सम्बन्धं करोति तपनपरिस्पन्दांश्च तत्रोपनयति, तत् द्रव्यं कालः। स हेतत् कलयति। आत्मा तु चेतनः सर्व्वोपाधिविनिर्मुक्तोन खल्वप्यन्यस्य धर्ममन्यत्रोपनयति। अचेतनन्तु द्रव्यमन्यस्य धर्ममन्यत्रोपनयत् दृष्टं, यथा पुष्पस्य गन्धं वायुरिति। एतेन परस्मिन् परं व्याख्यातम्। किञ्चित् कदाचित् स्पन्दते किञ्चिच्च कदाचिदित्यन्यपरिस्पन्दस्यान्यत्रो-पनयमन्तरेण परापरव्यवहारोनोपपद्यते इति। युगपदित्येकया क्रियया भूयसामवच्छेदः। यत् द्रव्यं तया क्रियया भूयसां सम्बन्धं करोति भूयःसु चैनामुपनयति, तत् द्रव्यं कालः। चिरमिति क्रमेण भवन्तीभिर्भूयसीभिरनियताभिः क्रियाभिर्य्यस्यावच्छेदस्तत्र प्रयुज्यते। क्षिप्रमित्यल्पीयसीभिः क्रियाभिः क्रियान्तरस्यावच्छेदइति। अस्य च,—

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ७ ॥**

**तत्त्वं भावेन ॥ ८ ॥**

तदेतत् सूत्रद्वयं कृतभाष्यं पुरस्तादिति ।

**नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ॥ ९ ॥**

नित्येषु वस्तुषु प्रावृषेण्यादिव्यवहारोन भवति, भवति त्वनित्येष्विति तत्र कालः कारणमित्यनुमीयते। किञ्चित् प्रावृष्युत्पद्यते किञ्चित् शरदि हेमन्तादौ च किञ्चिदिति। न खल्वनिमित्ता नियतकाल मुत्पत्तिरिति कालोनिमित्तमनुमीयते। वायौ तु प्रावृषेण्यादि व्यवहारस्तत्कालकारितधर्म्मान्तरगभिमाननिमित्तोभाक्तइति। परीचितः कालः दिगिदानीं परीच्यते,—

**इतइदमिति यतस्तद्दिश्यं लिङ्गम्॥ १०॥**

इतोऽवधिभूतादिदं दूरमन्तिकञ्चेति यस्माद्वस्तुनः प्रत्ययोभवति तद्वस्तु दिश्यं लिङ्गम्। तेन हि दिगनुमीयते। किं पुनस्तत्? दूरत्व मन्तिकत्वञ्च। यदेतत् दैशिकं परत्वमपरत्वञ्चाख्यायते। ततोहि दूरमन्तिकमिति बुद्धिरुत्पद्यते। हिमालयावस्थितस्य वै पुरुषस्य विन्ध्यमपेच्य पारिपात्रः परोभवति, पारिपात्रञ्चापेच्य विन्ध्योऽपर इति। कस्मात्? यस्मात् हिमालयविन्ध्ययोर्मध्ये यावन्तः संयोगास्ततो भूयांसः संयोगाहिमालयपारिपात्रयोर्मध्ये भवन्तीति। यश्चैतान् संयोगानुपनयति तत् द्रव्यं दिगिति। दिशश्च,—

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते॥ ११॥**

**तत्त्वं भावेन॥ १२॥**

आचार्य्य प्रवृत्तिर्ज्ञापयति आकाशकालदिगाख्यमेकं द्रव्यमिति। यतोऽसौ महता प्रयत्नेनाकाशे स्पर्शवदात्ममनसां व्यतिरेकमाह न कालदिशोः। तयोस्तु न कस्यापि। आकाशे वचनात् खल्वनयोरुक्तं मन्यते इति। यद्येकं द्रव्यं कथमाकाशं कालोदिगितिव्यपदेशभेदो भवति इत्यतआह,—

## कार्य्यविशेषेण नानात्वम् ॥ १३ ॥

शब्दोत्पत्तिः क्रियासंयोगयोश्चोपनयइति कार्य्यविशेषाः, तन्निमित्त-कस्य व्यपदेशभेदः । यथैकस्य प्राणभृतः कार्य्यविशेषादाचार्य्यो यजमानोयाजकइति। अस्त्वेकस्य द्रव्यस्य कार्य्यविशेषाद्व्यपदेशभेदः दिश-स्त्वेकेस्यान खल्वपि कार्य्यं विशिष्यते, संयोगोपनयोहि तस्याः कार्य्यं, तत्कथं प्राच्यादिव्यपदेशभेदोभवति ? उपाधिभेदादित्याह,—

## आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतोभूताच्च प्राची ॥ १४ ॥

यः खल्वादित्यस्य सृष्टिकाले पूर्वं भूतः प्रथमः संयोगः, यश्च तस्ये-ास्तं गतस्य पुनरुदेष्यतो भविष्यन् प्रथमः संयोगः, यश्च पुनरुदयतो भवन् प्रथमः संयोगः, स येनावच्छिद्यते सा प्राची । प्राक् खल्वस्यामा-दित्योऽञ्चतीति । यथोपाधिविशेषात् प्राचीव्यवहारः,—

## तथा दक्षिणा प्रतीच्युदीची च ॥ १५ ॥

तथैवोपाधिविशेषाद्दक्षिणादिव्यवहारइति । अञ्चतः खल्वादित्यस्य दक्षिणोऽंशो याऽवच्छिद्यते सा दक्षिणा दिक्। पूर्वाभिमुखः खल्वा-दित्योऽञ्चतीति । यस्याश्च दिशः प्रातिकूल्येनादित्योऽञ्चति सा प्रतीची। पूर्वाभिमुखोभ्रमन् खल्वादित्यः पश्चिमां दिशं पृष्ठतः कुर्वन्नञ्चतीति । यस्यां दिश्यूर्द्धमादित्योऽञ्चति सा दिगुदीची । उदीच्यां खल्वादित्यः पृथिव्याऊर्द्धं दूरमञ्चतीति। एतेन मथुरावस्थितस्य प्रयागे प्राची व्यवहारः, काश्यवस्थितस्य तत्रैव प्रतीचीव्यवहारश्च व्याख्यातः। मथुराया-मवस्थितस्य यस्यां दिशि प्रयागोभवति, तया खल्वादित्यस्य प्रथमः

संयोगस्तस्यावच्छिद्यते। काश्यवस्थितस्य च यया प्रयागोऽवच्छिद्यते तस्याः प्रातिकूल्येनादित्योऽस्तीति।

## एतेन दिगन्तरालानि व्याख्यातानि ॥१६॥

द्वयोर्द्वयोर्दिशोर्लक्षणमाङ्कर्य्येण दक्षिणापूर्वादयोविदिशोभवन्ति। यस्मात्पतति सा दिगूर्द्धा, यत्र पतति सा दिगधइति। आकाशकाल दिगाख्यमेकं द्रव्यमिति परतोनिर्दिष्टायादिशउपाधिभेदाद्व्यपदेशभेद-वचनेनैव कालाकाशयोरपि तथैव व्यपदेशभेदमुक्तं मन्यते सूत्र-कारः। तत्र यस्योत्पत्तिमारभ्य यावद्विनाशं यः कालः स तस्य भवन्, प्रागुत्पत्तेः स भविष्यन्, परतस्तु विनाशात् सएव भूतइति। तदेवं यदा द्रव्यं वर्त्तते स तस्य वर्त्तमानः कालः, यदोत्पत्स्यते स भविष्यन्, यदोपरतं सोऽतीतइति। यदोत्पद्यते स क्षणः, द्वौ क्षणौ लवइत्यादि यथाविषयं वेदितव्यम्। कथमस्मिन्नर्थे सूत्रं न दृश्यते। शैली ह्येषा भगवतः सूत्रकारस्य यदयं किञ्चिदर्थात् प्रज्ञापयति किञ्चिच्च साक्षादु-पदिशति इति।

एकमेव द्रव्यमाकाशं कालोदिक् चेत्यतिरिक्ताकाशसिद्धौ कृत-प्रयत्नः सूत्रकृदुपरराम। शब्दस्तत्र लिङ्गम्। तच्चैतत् तदा भवति यदि शब्दोगुणः स्यात्। तच्च नैवं मन्तव्यम्। श्रूयते खल्वत्र विप्रति-पत्तिरिति। अतोलिङ्गभूतस्य शब्दस्य गुणभावइदानीं परीक्ष्यते। नैवञ्चेदुपेक्ष्य स्थानवन्तमात्मानं कथमप्रस्तुतस्य शब्दस्य परीक्षाया-माचार्य्यः प्रवर्त्तते इति। तत्रानिमित्तः संशयोन खल्वपि निर्णयस्याङ्गं भवतीति संशयनिमित्तं तावदभिधत्ते,—

सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः ॥ १७॥

योधर्मोद्वयोः समानस्तस्योपलब्धेर्विशेषस्य चानुपलब्धेस्तत्स्मरणाच्च संशयोभवति । योवै खलु विशेषः स्मर्य्यते स चेन्नोपलभ्यते धर्म्मिणि, तदा तत्र संशयोभवति । तदुपलब्धौ संशयोनिवर्त्तते । दूरात् स्थाणुं पश्यन् खल्वयं पुरुषः सन्दिग्धे योऽयं दूरात् दृश्यते स स्थाणुर्वा भवेत् पुरुषोवेति । समानमनयोर्धर्म्ममारोहं परिणाहञ्चोपलभे विशेषञ्चानयोः पूर्वदृष्टं नोपलभे इति । यद्वै विशेषं वुभत्समानस्य किं स्विदित्यनवधारणं ज्ञानं स संशयइति । सामान्यप्रत्यक्षोदाहरणम्,—

दृष्टञ्च दृष्टवत् ॥ १८॥

दृष्टं स्थाण्वादि, दृष्टं यदारोहपरिणाहादि तद्युक्तं हि भवति। अतो दूरात् दृष्टे स्थाण्वादौ, स्थाणुपुरुषादेः समानोयोधर्म्मः पूर्वं दृष्टआरोह परिणाहादिस्तद्युक्ते संशयउत्पद्यते किं स्वित् स्थाणुराहोस्वित् पुरुष इति । समानं ह्यनयोर्धर्म्ममुपलभ्यते । तदेतत् दृष्टारोहादिमत् दृष्टं स्थाण्वादि संशयहेतुरिति । अथ विशेषाप्रत्यक्षोदाहरणम्,—

यथादृष्टमयथादृष्टत्वाच्च ॥ १९ ॥

येन खलु विशेषेण वक्रकोटरादिना करचरणादिना च स्थाणु पुरुषस्य दृष्टः तस्यायथादर्शनाच्च संशयउत्पद्यते। स्थाणौ पुरुषे च योविशेषः पूर्वमुपलब्धस्तमिह नोपलभे, सोऽयं स्थाणुः पुरुषोवेति। यथा खलु स्थाण्वादि पूर्वं दृष्टं न तथैतत् दृश्यते इति। तदेतत् यथादृष्टं स्थाण्वादिकमयथादृष्टत्वात् संशयं प्रयोजयति। एतेन विशेषस्मृति

व्याख्याता। तदेवं सामान्यप्रत्यक्षादिकं संशयहेतुरित्युक्तम्। अस्त्यन्य-दपि संशयकारणं विप्रतिपत्तिरिति। व्याहतमेकार्थदर्शनं विप्रतिपत्तिः। व्याघातः पुनर्विरोधोऽसहभावइति। तदुच्यते,—

**विद्याऽविद्यातश्च संशयः ॥ २० ॥**

यथार्थबुद्धिर्विद्या विपर्य्ययोऽविद्या। ताभ्याञ्च संशयोभवति। पुनः संशयग्रहणं पूर्वस्मान्निमित्तादेतदन्यत् संशयनिमित्तमिति प्रज्ञापनार्थम्। येयं विरुद्धा प्रतिपत्तिरस्त्यात्मेत्येकं दर्शनं नास्त्यात्मेत्य-परमिति, तयोरेका विद्या परा चाविद्या। कस्मात्? वस्तुनि विक-ल्पानुपपत्तेः कल्पान्तरानुपपत्तेश्च। न हि सद्भावासद्भावाभ्यामन्यः कल्पउपपद्यते। ताञ्चोपलभमानोऽन्यतरनिश्चयहेतुञ्चापश्यन् किं-स्विदिति नावधारयति, स संशयः। सह भवन्त्यौ खल्वेते विद्याऽविद्ये संशयहेतुः। अस्त्यात्मा नास्ति कर्मफलमित्यतोन जात्वपि संशयोत्-पत्तिरिति। सम्प्रतिपत्तेरहेतुः। यां वै भवान् विप्रतिपत्तिं मन्यते, सम्प्रतिपत्तिरेव सा वादिनोर्भवति। न खल्वपि सम्प्रतिपत्तेः संशय उत्पद्यते। तस्मादहेतुः विप्रतिपत्तिः संशयस्य। तृतीयोत्पत्तेरप्रति-षेधः। न खलु विप्रतिपत्तेः संशयहेतुभावः शक्यः प्रतिषेद्धुं। कस्मात्? तृतीयस्य संशयोत्पत्तेः। योवै मन्यते अस्त्यात्मेति तस्य खलु सा सम्प्रति-पत्तिः, यश्च मन्यते नास्त्यात्मेति, तस्यापि सम्प्रतिपत्तिरेव सा भवति। तृतीयं प्रति त्वेतद्व्याहतं दर्शनं विप्रतिपत्तिः संशयहेतुः। योयस्य पक्षस्तत्र तत्र सम्प्रतिपत्तिर्न तृतीयस्य। न हि तस्यानयोरन्यतरः पक्षइति स खल्वयं तत्त्वं बुभुत्समानोविरुद्धां प्रतिपत्तिञ्च वादिनोरुपलभमान-स्तत्त्वनिर्णयहेतुमनाकलयन् किमत्र तत्त्वमिति नावधारयति। सोऽ

त्वतउत्पद्यमानः संशयोविप्रतिपत्तेः सम्प्रतिपत्तिसमाख्यान्तर
योजनया न शक्योनिवर्त्तयितुमिति । तन्त्रान्तरसमाचाराच्च । तन्त्रा
न्तरे हि "समानानेकधर्म्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्था-
तश्च विशेषापेक्षोविमर्शः संशयः" इत्युक्तम् ।

तत्र समानजातीयसमानजातीयञ्चानेकम् । तस्य योधर्म्मः स
समानएवधर्म्मः संशयहेतुरिति । उपलब्ध्यनुपलब्ध्यव्यवस्थातः खल्वपि ।
सच्चोदकमुपलभ्यते तड़ागेषु असच्च मरीचिषु । एवं सदपि नोपलभ्यते
असदपि नोपलभ्यते । तत्र यदिदमुपलभ्यते यच्च नोपलभ्यते, तत्
किं सदाहोस्विदसदिति तत्त्वव्यवस्थापकप्रमाणानुपलब्धेः संशयोभवति ।
तत्र योऽयं संशयहेतुरुपलभ्यमानत्वमनुपलभ्यमानत्वञ्च, स समानएव
धर्म्मइति । विशेषविवक्षया तु तन्त्रान्तरे पुनर्वचनम् । समानस्यैकस्य
धर्म्मस्यानेकत्रोपपत्तिरनेकस्य चैकत्रेति । तावेतौ समानानेकधर्म्मौ
ज्ञेयस्थौ, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे इत्यमीषां विशेषः । सोऽयं
संशयः क्वोपयुज्यते इत्यत आह,—

## श्रोत्रग्रहणोयोऽर्थः स शब्दः ॥ २१ ॥

योऽयं श्रोत्रेण गृह्यतेऽर्थः स खलु शब्दः । तत्रायं संशयउपयुज्यते ।
योऽसौ शब्दः श्रोत्रेण गृह्यते, स किं द्रव्यमाहोस्विद्गुणउत कर्मेति संश-
योभवति । कस्मात् ?

## तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्ट-त्वात् ॥ २२ ॥

योऽयं शब्दे विशेषः संयोगजत्वं विभागजत्वं शब्दजत्वञ्च, सोऽयं तुल्य

जातीयेषु रूपादिगुणेषु अर्थान्तरभूतेषु द्रव्यकर्मसु च उभयथा दृश्यते संयोगजत्वं विशेषोद्रव्ये दृश्यते कर्मसु च गुणेषु च क्वचित् न रूपादिषु। विभागजत्वं शब्दलक्ष विशेषोन खल्वपि द्रव्येषु न रूपादिषु न कर्मसु चेति। तस्मात् संशयः किं द्रव्यस्य सतोऽयं विशेषः आहोस्वित् गुणस्य सतः अथ कर्मणः सतइति।

अथापि खलु तुल्यजातीयेष्वर्थान्तरभूतेषूभयथा विशेषस्य व्यावृत्तेदर्शनात् संशयः। उभयथा चार्थोविशिष्यते तुल्यजातीयेभ्यश्चार्थान्तरभूतेभ्यश्च। गन्धवत्त्वं पृथिव्याविशेषः। सा चेयं गन्धवत्त्वेन विशेषेण यथैवार्थान्तरेभ्योगुणकर्मभ्योविशिष्यते, तथैव तुल्यजातीयेभ्योऽवादिभ्योऽपि। शब्दस्य च योविशेषस्तेनासौ विशिष्यते द्रव्येभ्यो रूपादिभ्यः कर्मभ्यश्चेति। तत्र, किं द्रव्यस्य सतस्तुल्यजातीयेभ्यः पृथिव्यादिभ्योऽर्थान्तरभूतेभ्योगुणकर्मभ्यश्चायं विशेषः, अथ गुणस्य सतस्तुल्यजातीयेभ्योरूपादिभ्योऽर्थान्तरभूतेभ्योद्रव्यकर्मभ्यश्च, अथ कर्मणः सतस्तुल्यजातीयेभ्यउत्क्षेपणादिभ्योऽर्थान्तरभूतेभ्योद्रव्यगुणेभ्यश्चेति। तदेवं विशेषस्योभयथा दृष्टत्वादन्यतमव्यवस्थापकं प्रमाणमनुपलभमानस्य संशयोभवति योऽयं श्रोत्रेण गृह्यतेऽर्थः स किं द्रव्यमथ गुणआहोस्वित् कर्मेति। अथ निर्णयः

**एकद्रव्यत्वान्न द्रव्यम्॥२३॥**

शब्दोन द्रव्यम्। कस्मात्? एकद्रव्यत्वात्। एकस्मिन् खल्वाकाश द्रव्ये शब्दः समवैति न त्वनेकस्मिन्। द्रव्यन्त्वनेकस्मिन् समवैतीति न शब्दोद्रव्यम्। विशेषस्योभयथा दृष्टत्वात् प्रत्यवतिष्ठमानस्य द्रव्य वैधर्म्यात् स्थाप्यते एकद्रव्यत्वान्न द्रव्यमिति॥

**नापि कर्माचाक्षुषत्वात्॥२४॥**

कर्माणि चक्षुषा गृह्यन्ते शब्दस्तु न तथेति नायं कर्म। न ह्यस्याग्रहण
कारणं किञ्चिदुपलभ्यते। रूपवदवृत्तेरिति चेन्न तथाप्यकर्मत्वात् ।
अथ रूपिद्रव्यवृत्तीनि कर्माणि चक्षुषा गृह्यन्ते, शब्दस्त्वाकाशवृत्तिर्न
रूपिद्रव्येषु वर्त्तते, तस्माच्चक्षुषा न गृह्यते इति। एवं सति कर्माणि
रूपिद्रव्येषु वर्त्तन्ते शब्दस्तु न तथेति नैवासौ कर्म्म। रूपिद्रव्येषु हि-
ानि वर्त्तन्ते इति। अथ नायमाकाशे वर्त्तते किन्तु वीणादाविति,
र्हि चक्षुषा गृह्येत, चक्षुषा हि वीणादिकर्म गृह्यते इति। अथापि
खलु शब्दः स्पर्शवतामगुणइति नैवासौ वीणादिषु वर्त्तते इति। अथापि
खलु शब्दात् शब्दस्य निष्पत्तिर्भवतीति नायं कर्म्म। न कर्म्म कर्म-
णोनिष्पद्यते। तदेतत् वैधर्म्म्यं कर्म्मणोऽस्ति। अस्त्यपरं वैधर्म्यमचा-
क्षुषत्वम्। न खल्वपि संयोगे न विभागे शब्दः कारणं भवति। प्रमाणतो
ऽनुपलब्धेः। कारणञ्च संयोगे विभागे च कर्म्म। तदेवं शब्दोन द्रव्यं न
कर्म्म, यश्च परिशिष्यते सोऽयमिति शब्दस्य गुणत्वप्रतिपत्तिः। एकैक-
विशेषगुणाश्च पृथिव्यादयोभवन्ति। विशिष्यते चाकाशस्य शब्दः।
तस्मात् रूपादिवत् सोऽपि गुणइत्यनुमीयते। यत् पुनः कर्म्माण्याशु
विनश्यति शब्दोऽप्याशु विनश्यति, सोऽयम्,—

## गुणस्य सतोऽपवर्गः कर्म्मभिः साधर्म्यम् ॥ २५ ॥

गुणस्य सतः शब्दस्य योऽयमपवर्गश्चाशुविनाशः, स खलु कर्म्मभिः सा-
धर्म्यम्। यदि सन्नेव शब्दोन तर्हि सतः शब्दस्यापवर्गोभवितुमर्हति।
योहि भूत्वा न भवति स विनाशधर्म्मकोऽपवृज्यते। शब्दस्तु सन्—
उत्पद्य भवति न च भूत्वा न भवति। सोऽयं सन्नेवाभिव्यज्यते अभि-

व्यक्तश्चोपलभ्यते, न त्वसन्नुत्पद्यते उत्पन्नश्चोपलभ्यते इति। न ब्रूमः सन्नेव सदा शब्दइति। किन्तर्हि ? यदाऽसावुपलभ्यते तदा सन्निति। संस्थायं गुणोन द्रव्यं न खल्वपि कर्म्म। तदेवं गुणस्य सतः शब्दस्याप-वर्गः कर्मभिः साधर्म्म्यं भवति। सोऽयमुपलब्धिकाले सन्नपि तत्पूर्व्वा-परयोर्नास्ति। कस्मात् ?

## सतोलिङ्गाभावात् ॥ २६ ॥

यदा खल्वयमुपलब्धा शब्दमुपलभते, सन्तमेनमुपलभते। यदा तु नोपलभ्यते शब्दस्तदा त्वसौ नास्ति। प्रत्यक्षं लैङ्गिकञ्च खल्वर्थं प्रज्ञाप-यति अस्त्येतदिति। यदा त्वसौ नोपलभ्यते, तदैतस्य सद्भावे न प्रत्यक्षं न खल्वपि लिङ्गमस्ति। सतोलिङ्गाभावाच्चानुपलब्धिकाले नास्तीति विज्ञायते। आवरणादनुपलब्धिरितिचेन्नावरणानुपलब्धेः। अथ मन्येत, विद्यमानः खल्वपि शब्दआवरणेनावृतानोपलभ्यते रूपवदिति। तच्च नैवं मन्तव्यम्। कस्मात् ? आवरणानुपलब्धेः। एवं सति येनावृतः शब्दोनो-पलभ्यते तदावरणमुपलभ्येत नचोपलभ्यते, येनावृतं रूपं नोपलभ्यते तत् खल्वावरणमुपलभ्यते इति। तस्मादनुपलब्धेर्नास्त्यावरणम्। आव-रणाभावाच्च सतः शब्दस्यानुपलब्धिर्नोपपद्यते। तस्मात् प्रागुच्चारणा-दनुपलब्धेरावरणानुपलब्धेश्चोपलब्धिपूर्व्वापरयोर्नास्ति। सतोलिङ्गाभा-वात्तु प्रतिपद्यामहे अनुपलब्धिकाले नास्तीति। इतश्च प्रतिपद्यामहे न शब्दः सदा सन्निति।

## नित्यवैधर्म्म्यात् ॥ २७ ॥

यदभूत्वा भवति तदुत्पत्तिधर्मकं यच्च भूत्वा न भवति तद्विनाश-धर्मकम्। नैतावुत्पत्तिविनाशौ नित्यधर्म्मः। न वै नित्यमुत्पत्तिधर्म्मकं

षपि विनाशधर्मकम्। शब्दस्त्वभूत्वा भवतीत्युत्पत्तिधर्मकः, भूत्वा च भवतीति विनाशधर्मकः। तस्मान्नित्यवैधर्म्यादनुपलब्धिकाले ना-ति। वचनेन खल्वपि वक्तुरनुमानं भवति। कस्मात्? उत्पत्ते-शाभावात्। यस्मात् पुरुषादयः शब्दोयथाभूत उत्पद्यते, न तस्य ाभूतस्य पुरुषान्तरादुत्पत्तिः। यथाभूतः खलु शब्दः पुरुषान्तरादु-द्यते, तस्य पुरुषान्तरादुत्पद्यमानस्यापि न तथाभावोभवति। तस्मा-नेन वक्तुरनुमानं भवति। तदेतदपरं नित्यवैधर्म्यम्॥

**अनित्यश्चायं कारणतः॥२८॥**

भेरीदण्डसंयोगादेः कारणात् खल्वयमुत्पद्यते। तस्मादनित्यः। रणवदनित्यं दृष्टं स्थाल्यादि, कारणवांश्चायमिति। सोऽयं शब्दः रणतश्चानित्योन केवलं सतोलिङ्गाभावात् नित्यवैधर्म्याच्चेति। किमुत्पत्तिकारणं संयोगादिः शब्दस्य आहोस्विदभिव्यक्तिकारण-ति। यद्युत्पत्तिकारणमनित्यः शब्दः। अथाभिव्यक्तिकारणं, नायम-त्योभवितुमर्हति। सतएवाभिव्यक्तेः। यं वै भेरीदण्डादिसंयोगमुत्प-कारणं शब्दस्येति मन्यते, सोऽयमभिव्यक्तिकारणं शब्दस्य स्यात्। ात् न कारणवत्त्वं सिध्यति इत्यतआह,—

**नचासिद्धं विकारात्॥२९॥**

न त्वसिद्धं कारणवत्त्वं शब्दस्य। कस्मात्? विकारात्। विक्रियते हि उदात्तादिरूपेण। न त्वसौ नित्यस्य घटते। एवं गुणान्तरापत्त्युप-ह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकारः। विकारधर्मित्वे नित्यत्वाभावात् कारणाच्छब्दस्योत्पत्तिर्न त्वभिव्यक्तिरिति। अथापि

खलु विक्रियते शब्दः तीव्रः शब्दोमन्दः शब्दइति। तीव्रमन्दभावे विक्रियमाणं सुखादि कारणवत् दृष्टं,तथा चायमिति।

सांशयिकमेतत् किं कारणस्य तीव्रमन्दभावात् तीव्रमन्दभावे शब्दोविक्रियते,अथ व्यञ्जकस्य तीव्रमन्दभावाद्ग्रहणस्य तीव्रमन्दभावे तथा गृह्यते इति। कुतः संशयः? ग्रहणस्योभयथा दर्शनात्। सुखादे सन्नेव तीव्रमन्दभावोगृह्यते, तथा व्यञ्जकस्य प्रकाशस्य तीव्रमन्दभावात् रूपग्रहणस्य तीव्रमन्दभावोभवात, तेन चासन्नपि तीव्रमन्दभावोरूपादौ गृह्यते इति। सोऽयं व्यञ्जकस्य संयोगस्य तीव्रमन्दभावा शब्दग्रहणस्य तीव्रमन्दभावः स्यात् नतु शब्दोभिद्यते रूपवदिति तत्र नैवं मन्तव्यम्। कस्मात्?

## अभिव्यक्तौ दोषात् ॥ ३० ॥

येषां समानदेशानां समानेनेन्द्रियेण ग्रहणं भवति, एकेन व्यञ्जकेन तेषामभिव्यक्तिर्दृष्टा। यथा वस्तुनः संख्या परिमाणं रूपञ्चैकेनेन्द्रियेण गृह्यते, एकश्चालोकस्तेषामभिव्यञ्जकइति। संख्याऽभिव्यक्तये कृतप्रयत्नः खल्वयं पुरुषोयावदालोकमुपादत्ते, तावत् रूपमपि तेनाभिव्यज्यते। सति चैवमेकस्य वर्णस्याभिव्यक्तये कृतप्रयत्नस्य पुरुषस्य सर्व्वेषां वर्णनामभिव्यक्तिः प्राप्नोति। सोऽयमभिव्यक्तौ दोषः अथैतद्दोषपरिजिहीर्षया यावन्तोवर्णास्तावन्तोऽभिव्यञ्जका अभ्युपगम्यन्ते, समानदेशस्थितानां समानेन्द्रियग्रहणानामपि व्यञ्जकभेदः प्राप्नोति। न त्वेवं दृष्टम्। दृष्टाच्चादृष्टं सिध्यति। अयमप्यभिव्यक्तिपक्षे दोषः। तीव्रेण शब्देन मन्दस्य शब्दस्याभिभवानुपपत्तिश्चापरो

ष:। तीव्रेण खलु भेरीस्वनेन मन्दस्तन्त्रीस्वनोऽभिभूयते। स चाय-
भिभवोऽभिव्यक्तिपक्षे नोपपद्यते। कस्मात्? प्राप्त्यभावात्। व्यञ्जकेन
मानदेशः खल्वयमभिव्यज्येत, न त्वसमानदेशः। प्राप्त्यभावात्।
खल्वपि देशान्तरं व्यञ्जकः प्राप्नोति। अप्राप्तावप्यभिव्यक्तौ क्वचि-
त्र व्यञ्जकसद्भावे सर्वत्र शब्दोऽभिव्यज्येत। अप्राप्तेरविशेषात्।यदि वै
ञ्जकसमानदेशः शब्दोऽभिव्यज्यते, भेरीशब्देन तन्त्रीशब्दस्याभि-
वोनोपपद्यते। कस्मात्? प्राप्त्यभावात्। न खलु भेरीस्वनेन तन्त्री-
नः प्राप्यते। अप्राप्य चाभिभवन् सर्वमभिभवेत्। तत्र क्वचिदेव
र्य्यां प्रणादितायां समानकालास्तन्त्रीस्वनालोकेषु न श्रूयेरन्निति।
त्पत्तिपक्षे त्वयं दोषोन भवति। सन्तानक्रमेण श्रोत्रप्रत्यासन्नस्तीव्रः
ब्दस्तथाभूतं मन्दं शब्दमभिभवतीति। अयञ्चाभिव्यक्तौ दोषः,
रस्थस्य चानुपलब्धिः। यद्यभिव्यज्यते शब्दोनोत्पद्यते, दूरस्थेन
ब्दस्यानुपलब्धिः प्रसज्यते। समानदेशोहि व्यञ्जकोव्यनक्तीति। वैभ-
ादिति चेदश्रवणानुपपत्तिः। विभुः शब्दोऽभिव्यज्यते इति दूरस्थस्य
ानुपलब्धिः। एवं चेदश्रवणं नोपपद्यते। तथा च क्वचिदेवाभिव्यक्तं
र्वोलोकः शृणुयात्। विभुः खल्वभिव्यज्यते इति। निवृत्तौ चानुप-
ब्धिः। यद्यभिव्यज्यते शब्दोव्यञ्जकनिवृत्तावनुपलब्धिः प्राप्नोति
दीपवत्। यथा प्रदीपनिवृत्तावर्थोनोपलभ्यते, एवं व्यञ्जकनिवृत्तौ
ब्दोऽपि नोपलभ्येत। न तु नोपलभ्यते। यदा वै पुरुषोदारु
श्चति, दारुपरशुसंयोगनिवृत्तौ दूरस्थितः शब्दमुपलभते उत्पत्ति-
क्षे त्वयमदोषः। सन्तानोत्पत्तिक्रमेण श्रोत्रप्रत्यासत्त्या संयोगनिवृत्ता-
पलब्ध्युपपत्तेरिति। तस्मात्,—



संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः ॥ ३१ ॥

भेरीदण्डादिसंयोगात् शब्दस्य निष्पत्तिरुत्पत्तिर्भवति नाभिव्यक्तिः। विभागात् खल्वपि। पूर्वस्माद्देशाद्विभक्तोवायुरपरेण देशेन संयोगात् प्रतिहन्यमानः शब्दमुत्पादयति। पाट्यमाने च वंशे यः शब्द उत्पद्यते, दलद्वयविभागस्तत्र निमित्तम्। शब्दश्च सूक्ष्मः स्थूलस्य हेतुः। प्रतिशब्दात्मा च शब्दः शब्दान्निष्पद्यते। सन्तानक्रमेण प्रत्यासन्नाच्च शब्दाद्विज्ञायते उत्पत्तिधर्मकोऽयं नाभिव्यक्तिधर्मकइति। तारमन्दभावेन खल्वयं प्रत्यासन्नोभवति। न चैतदेकस्य शब्दस्य सम्भवति। नानाभूतस्य तु शब्दस्यैतत् स्यात्। तदित्थम्भूतात् शब्दादनुमीयते अयमुत्पद्यते नाभिव्यज्यते इति। शब्दः खल्वपि मात्रया वायुं प्रेरयति। प्रेरितस्य प्रतिहतः शब्दनिमित्तं भवति।

यत्र च सन्तानक्रमेण प्रत्यासन्नस्य ग्रहणं, न तत्र पूर्वः शब्दउत्तरस्य शब्दस्य निमित्तम्। प्रयत्नेन हि पूर्वः शब्दस्तथोत्पद्यते, उत्तरस्तु शब्दोवेगकारितस्तया भवति। सोऽयं शब्दसन्तानोयावद्वेगमनुवर्त्तते वेगोपरमे चोपरमति। पूर्वः शब्दउत्तरस्य शब्दस्य निमित्तमिति पक्षे शब्दसन्तानस्यानुपरमप्रसङ्गः। पूर्वोहि शब्दोहेतुरुत्तरस्येति नायमुच्छिद्येत। पूर्वादुत्तरनाशे च तृतीयस्याश्रवणप्रसङ्गोहेतुवचनं वा। अथ मन्येतोत्तरः शब्दः पूर्वं शब्दं नाशयन् स्वयमपि तेनैव नश्यतीति सन्तानस्योच्छेदोभवति। एवं सति द्वितीयः शब्दः पूर्वं शब्दं नाशयन् स्वयमपि तेन नश्यन् न तृतीयं शब्दमुत्पादयेत्। तथा सति तृतीयः शब्दोन श्रूयेत। अथ यस्मात् शब्दात् परतोन शब्दोपलब्धिः सएवोत्तरोऽन्त्यः शब्दः पूर्वमुपान्त्यं शब्दं नाशयन्

नैव स्वयञ्च नश्यतीति। एवन्तर्हि अयमुत्तरः शब्दः पूर्वस्मात् शब्दात् नश्यति न त्वयनित्यत्र हेतुर्वक्तव्यः। न त्वसावस्ति। यदा चान्त्यः शब्द उत्पद्यते तदुत्तरक्षणे खल्वयमुपान्त्यं नाशयन् स्वयमपि तेन नश्यति इति वक्तव्यम्। सोऽयमुपान्त्यं नाशयनन्यञ्च जनयन् नश्यतीति कुतोन विज्ञायते। तस्माद्विशेषहेत्वभावादयमसमाधिः। कस्तर्हि समाधिः? परतोऽनुपलब्धेः सन्तानोच्छेदोविज्ञायते। स च किञ्चिन्निमित्तमनुमापयति। तच्च कारणनिवृत्तिरेवावधार्य्यते। महता खल्वयं प्रयत्नेन वायुं प्रेरयति, स तु तथा प्रेरितस्तेषु प्रदेशेषु प्रतिहतः शब्दोत्पत्तौ निमित्तभावं प्रतिपद्यते। तदेवं यावद्वेगवशाच्चलन् वायुः प्रतिहतोभवति तावच्छब्दसन्तानः प्रवर्त्तते। वेगोपरमे च क्रियोपरमात् सन्तानोच्छेदः। दृष्टं हि प्रतिहतोवायुः शब्दमुत्पादयतीति॥

## लिङ्गाच्चानित्यः शब्दः॥ ३२॥

सतोलिङ्गाभावादिभ्यश्चेति चार्थः। व्याख्यातं तत्। लिङ्गं खल्वपि शब्दमनित्यं प्रज्ञापयति। किं पुनर्लिङ्गम्? यत्तन्त्रान्तरेऽनुशिष्यते "आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च" इति। आदिः कारणं, तद्व्याख्यातम्। ऐन्द्रियकः खल्वपि। दूरादुत्पन्नः शब्दः सन्तानक्रमेण श्रोत्रप्रत्यासन्नोगृह्यते। यदि शब्दोऽनित्यउत्पद्यते, सन्तानक्रमेणास्य श्रोत्रप्रत्यासत्तिरुपपद्यते। अथ नित्योऽभिव्यज्यते, नास्य श्रोत्रेण प्रत्यासत्तिर्भवितुमर्हति। ततइन्द्रियेण ग्रहणं न प्राप्नोति। व्यञ्जकसमानदेशो हि व्यज्यते इति। तीव्रं सुखं मन्दं सुखमिति कृतकं यथोपचर्य्यते, शब्देऽपि तथोपचारोदृष्टः तीव्रः शब्दोमन्दः शब्दइति। तथोप-

चर्य्यमाणमनित्यं दृष्टं, तस्मादनित्यः शब्दइति। यस्तु शब्दस्य नित्यत्व
प्रतिजानीते, स कस्माद्धेतोः प्रतिजानीते ?

## द्वयोस्तु प्रवृत्त्यारभावात् ॥ ३३ ॥

तुशब्दात् पक्षोविपरिवर्त्तते। योऽध्यापयति यश्चाध्याप्यते तयो-
र्द्वयोरध्यापनेऽध्ययने च न भवेत् प्रवृत्तिर्यद्यनित्यः शब्दः स्यात्। आचा
र्य्यस्थः शब्दोयदन्तेवासिनमापद्यते तदध्यापनम्। यदि नित्यः शब्दो-
विद्यमानस्य शब्दस्य देशान्तरप्राप्तिरुपपद्यते, अथानित्यः शब्दोनाश
देशान्तरप्राप्तिर्घटते। तदेवमध्यापनेऽध्ययने चाचार्य्यस्यान्तेवासिनश्च न
भवति प्रवृत्तिः। योऽयमनित्यपक्षे द्वयोः प्रवृत्त्योरभावस्तस्मादनुमीयते
नित्यः शब्दइति ॥

## प्रथमादिशब्दात् ॥ ३४ ॥

प्रथमा सामिधेनी मध्यमा सामिधेन्युत्तमा सामिधेनीति प्रथमाद्य
शब्दास्तदा भवन्ति यदि नित्यः शब्दः स्यात्। अवस्थितानां वै प्रथमाद्य
व्यपदेशालोके, न त्वनवस्थितानाम्। तस्मात् प्रथमादिशब्दादनुमीयते
यः प्रथमोयश्चोत्तमः तावेतौ सह भवतइति ॥

## सम्प्रतिपत्तिभावाच्च ॥ ३५ ॥

नित्यः शब्दइति प्रकृतम्। का पुनरियं सम्प्रतिपत्तिः ? सम्यगभेदे
प्रतिपत्तिर्ज्ञानं सम्प्रतिपत्तिः। ज्ञायते खल्वयमनुवाकोदेवदत्तेनाधी
तोऽयमेव यज्ञदत्तेनाप्यधीयते इति। यद्यनित्यः शब्दः, समानवर्ण
राशिरप्यनुवाके नैकोभवतीति नेयं सम्प्रतिपत्तिर्भवितुमर्हति। भवति

वं सम्प्रतिपत्तिः। सम्प्रतिपत्तिभावाचानुमीयते नित्यः शब्दइति।
इमे हेतवः,—

**सन्दिग्धाः ॥ ३६ ॥**

कस्मात्? नृत्यादीनामसदृभुवामप्यध्यापनेऽध्ययने च द्वयोः प्रवृत्त्यो
ात्रात् प्रथमादिशब्दात् सम्प्रतिपत्तिभावाच। नृत्यादयोवै बहवो-
वन्त्यनित्याः। तत्रापि द्वयोः प्रवृत्तिर्भवति। सेयं प्रवृत्तिरनित्येऽपि
न्ती न नित्यत्वपचे व्यवतिष्ठते इति। न वै खल्वाचार्य्यस्य शब्द-
ान्तेवासिनि प्राप्तिरध्यापनम्। किन्तर्हि, नृत्योपदेशवदृष्टहीतस्यानु-
रणमिति। नृत्यमधीते वटुरध्यापयत्येनं नाव्याचार्य्यइति। प्रथमं
त्यं द्वितीयं नृत्यं प्रथमं भोजनं द्वितीयं भोजनमित्यादावनित्येऽपि
थमादयः शब्दाः प्रयुज्यमानान नित्यत्वहेतवोभवन्ति। सम्प्रति-
त्तिभावः खल्वपि, तदेवेदं नृत्यं तएवामी केशास्तदेवैतदौषधमित्य
ात्येऽपि दृष्टोन नित्यत्वहेतुरिति।

ये चान्ये हेतवः शब्दत्वात् अस्पर्शत्वात् अभ्यासादित्येवमादयः, तेऽपि
न्दिग्धाः। शब्दत्वं यथा नित्यतायां तथैवानित्यतायामपि शक्यं
ोक्तुम्। स्पर्शवांश्चाणुर्नित्यश्च, अस्पर्शञ्च कर्मानित्यञ्चेति। द्विर्नृत्यतु
भुङ्क्ते द्विरग्निहोत्रं जुहोतीति।

यदि नित्यः शब्दः, पञ्चाशद्वर्णाः चतुर्दशाचइत्येवमादिका संख्योप-
ते। अथानित्यः शब्दः, एकैकएव वर्णाभवन्त्यपरिसंख्येयाइति
ाशदाद्याः संख्यानोपपद्यन्ते। अस्ति चेयं संख्योपपत्तिः। तस्मादनु-
यते नित्यः शब्दइति। अयमपि सन्दिग्धोहेतुः। वक्षीषु वीणासु
मानासु प्रयुज्यते वीणा वाद्यते इति। कुतएतदित्यतआह,—

सति वहुत्वे संख्याभावः सामान्यतः ॥ ३७॥

ये वै कचित् ककाराः सर्वेऽप्यमी ककाराएव। एवं खकाराः एवं गकाराइत्यादि। तदेवं सर्वे ककाराः समानाइत्येकोभवति ककारः। तथैकः खकारएकोगकारः। एवं शेषेषु। सेयं ककारादीनां सामान्यमाश्रित्य पञ्चाशद्वर्णाइत्येवमादिका संख्या भवतीति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये द्वितीयस्याध्यायस्य द्वितीयमाह्निकम्॥

समाप्तश्चायं द्वितीयोऽध्यायः॥

## अथ तृतीयोऽध्यायः।

स्थानवतां परीक्षेत्यात्मानं परीक्षितुमारभते,—

**प्रसिद्धा इन्द्रियार्थाः॥ १॥**

घ्राणरसनचक्षुस्त्वक्‌श्रोत्राणीन्द्रियाणि, गन्धरसरूपस्पर्शशब्दाः पृथि-
ादिगुणास्तदर्थाश्च प्रसिद्धाः। घ्राणमिन्द्रियं गन्धं गृह्णाति, रसनं
सं, चक्षूरूपं, त्वक् स्पर्शं, श्रोत्रं शब्दमिति प्रतिनियतमेषां ग्रहणं
सिद्धम्। न खल्वपि घ्राणं रूपं गृह्णाति, न चक्षुर्गन्धं, न रसनं
ब्दं, न त्वक् रसं, न श्रोत्रं स्पर्शमिति। यदिन्द्रियं यदुपादानं, तत्
पादानस्य द्रव्यस्य गुणमसाधारणं गृह्णाति न गुणान्तरमिति प्रसि-
मेव। प्रसिद्धत्वान्न हेत्वपेक्षा। कथं स्वोपादानगुणमेव गृह्णाति न
णान्तरमित्यत्र न खल्वपि हेत्वपेक्षा भवतीति। सेयम्,—

**इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः॥२॥**

इन्द्रियेभ्योऽर्थेभ्यश्च योऽयमन्योऽर्थआत्मा तस्य हेतुर्भवति। किं
सिद्धमिन्द्रियमात्मनोहेतुराहोस्वित् प्रसिद्धोऽर्थइति। न वै खल्वि-
द्रियं न चार्थआत्मनोहेतुः। यस्मात्,

**सोऽनपदेशः॥ ३॥**

येनापदिश्यते सोऽयमपदेशोहेतुर्लिङ्गमित्यनर्थान्तरम्। इन्द्रिये-
र्थेन च न खल्वात्मा शक्यतेऽपदेष्टुमित्यात्मनोऽनपदेशोऽर्थश्चेन्द्रि-

यश्चेति। इन्द्रियार्थप्रसिद्धिस्त्वपदेशः। प्रसिद्धिर्ज्ञानं रूपमिति वा रसइति वा भवति। तत् खलु गुणः किञ्चिद्द्रव्यमाश्रयति। रूपवत्। यच्चाश्रयति तत् द्रव्यमात्मेति। अस्तु तर्हि संघातइन्द्रियं वा प्रसिद्धेराश्रयः ? न,

**कारणाज्ञानात् ॥ ४ ॥**

न खल्विन्द्रियं संघातं वा प्रसिद्धिराश्रयति। न ह्येतेषां कारणेषु पृथिव्यादिषु ज्ञानमस्ति। कारणगुणपूर्वकोहि कार्य्यगुणः पृथिव्यादौ दृष्टइति। अथापि खल्विन्द्रियसंघातकारणेष्वसती प्रसिद्धिः कार्य्येष्विन्द्रियसंघातेषु प्रादुर्भविष्यति। तच्च नैवं प्रतिपत्तुमर्हति। कस्मात् ?

**कार्य्येषु ज्ञानादज्ञानाच्च ॥ ५ ॥**

क्वचित् कार्य्ये ज्ञानमुपलभ्यते संघातादौ, क्वचिच्च नोपलभ्यते घटादौ। तस्मात् प्रतिपद्यामहे न खल्वपि कारणेष्वसज्ज्ञानं कार्य्येषु प्रादुर्भवति इति। कारणेष्वसच्चेत् कार्य्ये प्रादुर्भवेत्; सर्वत्राविशेषेण प्रादुर्भवेत्, नवा प्रादुर्भवेत्, न जात्वपि क्वचित् प्रादुर्भवेत्, विशेषहेतुर्वा वक्तव्यइति। तदेवं नेन्द्रियं न चार्थोन खल्वपि संघातः प्रसिद्धेराश्रयः। इन्द्रियमर्थश्चात्मनोन हेतुः। कस्तर्हि हेतुः ?

**अन्यदेव हेतुरित्यनपदेशः ॥ ६ ॥**

एवशब्दादिन्द्रियमर्थञ्च व्यवच्छिनत्ति। इन्द्रियेभ्यस्तार्थेभ्यस्तान्यदेव हेतुरितीन्द्रियमर्थश्चानपदेशोऽहेतुः। नैताभ्यामात्मा शक्योऽपदेष्टुमिति। किं पुनरन्यत् ? "आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्"—इति वक्ष्यति। कस्मादिन्द्रियमर्थश्चानपदेशः ?

## अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ॥ ६ ॥

यस्मादर्थान्तरमर्थान्तरस्यानपदेशोभवति न तेनासौ शक्योऽपदेष्टुमिति। न यादृगिदं भवति रूपमात्मनोहेतुरिति, तादृगेतद्भवति इन्द्रियार्थस्यात्मनोहेतुरिति। अस्तु तर्हि इन्द्रियार्थप्रसिद्धिरात्मनोऽनपदेशः। अर्थान्तरमिन्द्रियार्थप्रसिद्धिरर्थान्तरस्यात्मेति। तच्च नैवं भवति। प्रसिद्धिपूर्व्वकत्वादपदेशस्य। अप्रसिद्धोह्यनपदेशः। तदेतत् सिध्यति योरर्थान्तरभूतयोः प्रसिद्धिर्नास्ति, तयोरेकमन्यस्यानपदेशः। ययोरस्ति प्रसिद्धिस्तयोरर्थान्तरमपदेशोभवत्यर्थान्तरस्येति। ज्ञानस्यात्मनश्चास्ति प्रसिद्धिरिति ज्ञानमात्मनोऽपदेशः। आत्मनि खल्वेतद्भवति। इन्द्रियार्थाभ्यां न तस्य प्रसिद्धिरितीन्द्रियमर्थश्चानपदेशएवात्मनइति। ज्ञानञ्च खल्वेतदात्मनः कार्य्यं नात्यन्तमर्थान्तरभूतमिति। अर्थान्तरं तर्ह्यर्थान्तरस्यानपदेशएव? यत्र प्रसिद्धिर्नास्ति तत्रार्थान्तरमर्थान्तरस्यानपदेशः। यत्र त्वस्ति प्रसिद्धिस्तत्र भवत्यपदेशोऽर्थान्तरमर्थान्तरस्येति। किं पुनरर्थान्तरमर्थान्तरस्यापदेशोलिङ्गं भवति? तदुच्यते,—

## संयोगि समवाय्येकार्थसमवायि विरोधि च ॥८॥

अर्थान्तरमर्थान्तरस्यापदेशः। ययोः खल्वर्थान्तरभूतयोः संयोगादिरस्ति, तयोरर्थान्तरमर्थान्तरस्य लिङ्गं भवति। इन्द्रियन्तु नात्मनः संयोगि न समवायि नैकार्थसमवायि न विरोधीत्यनपदेशएवेति। एतेनार्थोव्याख्यातः। एभ्यश्चान्यत्रानुमानाभिमानः सम्भावनामूलेन खल्वपि प्रमिताद्युपयुज्यते। प्रमाणतोह्युपलब्धेस्तथाभावेनान्यथ्योन

विपर्य्ययः। विपर्य्येति चान्यदनुमानमिति न तत्प्रमाणम्। कार्य्यं न कारणादत्यन्तमर्थान्तरभूतमिति नात्र तयोरुपसंख्यानम्। यदर्थान्तरमपदेशोभवत्यर्थान्तरस्य, तत् खल्वत्रोपसंख्यायते। नवमे तु लैङ्गिकोपसंख्याने तदप्युपसंख्यास्यतीति। एषामुदाहरणम्,—

कार्य्यं कार्य्यान्तरस्य॥९॥

कार्य्यं शरीरसंयोगि त्वग्द्रव्यं कार्य्यान्तरस्य संयोगिनः शरीरद्रव्यस्य लिङ्गमर्थान्तरभूतम्। सहजं खल्वावरणं शरीरस्य त्वगुच्यते। तच्चैतत् शरीरस्य न कार्य्यं न कारणं केवलं सहोत्पद्यमानं नियतसंयोगि शरीरेणेति। कार्य्यं खल्वपि रूपं द्रव्यसमवेतं कार्य्यान्तरस्य समवायिनोलिङ्गं, कार्य्यञ्च शब्दः कार्य्यान्तरस्याकाशस्य लिङ्गमिति। कार्य्यं खल्वपि रूपं स्पर्शश्चैकस्मिन्नर्थे समवैति। तयोरर्थान्तरमेकमर्थान्तरभूतस्यापरस्य लिङ्गमिति। अथ विरोधि,—

विरोध्यभूतं भूतस्य॥१०॥

अभूतं नास्तीत्यनर्थान्तरम्। असत् खल्वपि विरोधि सतोविरोधिनोलिङ्गम्। नकुलः खल्वसन्नहेर्लिङ्गं भवति। निराकुला हि तत्र तस्यावस्थितिरवस्थित्युचिते देशे॥

भूतमभूतस्य॥११॥

सद्विरोधि विरोध्यन्तरस्यासतोलिङ्गम्। नकुलेन सताऽनुमीयते नास्त्यत्राहिरिति॥

भूतोभूतस्य॥१२॥

भूतोविरोधी भूतस्य विरोधिनोलिङ्गम्। गतिविशेषात् प्रसर्पता

नकुलेनानुमीयते अस्त्यत्राहिरलक्ष्यइति। तथाभूतेन चाऽहिना नकुलस्यानुमानम्। अथापि खल्वेतदर्थान्तरमर्थान्तरस्यापदेशोन त्वन्यदिति कुतएतत् प्रतिपत्तव्यम्?

**प्रसिद्धिपूर्वकत्वादपदेशस्य॥१३॥**

प्रसिद्धिपूर्वकः खल्वपदेशोभवति। अस्ति चैतेषु प्रसिद्धिर्नियत संबन्धात्। तस्मादेभिरर्थान्तरभूतैरप्यर्थान्तरभूतान्येतान्यपदिश्यन्ते इति भवन्त्येतेऽपदेशाः। अन्ये त्वनपदेशाः, न खल्वपि तेषु प्रसिद्धिरस्ति नियतसंबन्धस्याभावात्। यस्मात् प्रसिद्धिपूर्वकोभवत्यपदेशस्तस्मात्,

**अप्रसिद्धोऽनपदेशः॥१४॥**

यत्र नास्ति प्रसिद्धिः सोऽनपदेशः॥

**असन् सन्दिग्धश्चानपदेशः॥१५॥**

यत्रानुमीयते, तत्र योन भवति हेतुः, सोऽयमसन्ननपदेशः। सन्दिग्धश्च हेतुरनपदेशोऽहेतुः। नैताभ्यां शक्यमपदेष्टुमिति। सन्दिग्धश्चानैकान्तिकः सव्यभिचारइत्यनर्थान्तरम्। व्यभिचारश्चैकत्राव्यवस्था। सोऽयमनैकान्तिकः। साध्यश्चैकोऽन्तः, तदभावश्चैकोऽन्तः। यः खल्वेकस्मिन्नन्ते वर्त्तते सऐकान्तिकः। विपर्य्ययादनैकान्तिकः योद्वयोरप्यन्तयोर्वर्त्तते इति। तन्त्रान्तरे च, सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः पञ्चानपदेशाउक्ताः। "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः। यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः। साध्याविशिष्टः साध्यत्वात् साध्यसमः। कालात्ययापदिष्टः

कालातीतः" इति। तदिमेऽप्रसिद्धाऽसन्तः सन्दिग्धाश्चेति। अनपदेशस्योदाहरणम्,—

**यस्माद्विषाणी तस्मादश्वः ॥ १६ ॥**

अश्वविषाणिनोः प्रसिद्धिर्नास्तीत्यप्रसिद्धोऽनपदेशः। न चाश्वे विषाणमस्तीत्यसन्ननपदेशः। यश्च विषाणी नासावश्व इति सन्दिग्धश्चानपदेशः। अथापि खल्वश्वेऽपि दर्शनमस्ति गव्यपीति अप्रसिद्धः सन्दिग्धश्चानपदेशः। अश्वेऽपि कदाचिन्नास्ति दर्शनमित्यसंश्चानपदेश इति ॥

**यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ॥ १७ ॥**

यस्माद्विषाणी तस्मादश्व इति चार्थः। तद्व्याख्यातम्। गवि यद्विलक्षणं विषाणं, न तस्य प्रतिसन्धानेन हेतुः प्रवर्त्तते। विषाणमात्रस्य त्वभिसन्धानमिति। अन्यदेव हेतुरिति यदन्यदात्मनो हेतुरित्युक्तं, तदन्यदिदानीमभिधीयते,—

**आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥ १७ ॥**

आत्मना इन्द्रियस्य तस्य चार्थेन सन्निकर्षात् यदुत्पद्यते तदन्यत्। किं पुनरात्मेन्द्रियार्थसन्निकर्षादुत्पद्यते ? ज्ञानमुपलब्धिर्बोध इति। तच्चैतदात्मनो हेतुः। न त्विन्द्रियमर्थश्च। कार्य्यभूतं खल्वेतत् कारणभूतस्यात्मनोऽपदेश इति। न वै खल्विन्द्रियं ज्ञानेन शक्यमपदेष्टुम्। कस्मात् ?

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्। यः खल्वर्थो दर्शनेन गृहीतः स्पर्शनेनापि सोऽर्थो गृह्यते। यमहमद्राक्षं चक्षुषा तमेवैतर्हि स्पर्शनेन स्पृशामि, यञ्चास्प्राक्षं स्पर्शनेन तमेवैतर्हि चक्षुषा पश्यामीति। तावेतावेकविषयौ प्रत्ययावेककर्तृकौ प्रतिसन्धीयेते। तत्र योऽसौ चक्षुषा स्पर्शनेन चैकमर्थं गृह्णात्येककर्तृकौ च प्रत्ययौ प्रतिसन्धत्ते, सोऽयमर्थान्तरमात्मा। इन्द्रियं खलु स्वं स्वं विषयग्रहणं प्रतिसन्धातुमर्हति न त्विन्द्रियान्तरस्य विषयान्तरग्रहणमिति। संघातोऽप्यवस्थाभेदाङ्क्षियमानोऽनेकइति न भिन्ननिमित्तौ विभिन्नकालीनौ प्रत्ययावेककर्तृकौ प्रतिपत्तुमर्हति, योऽहं बाल्ये पितरावन्वभवं सएवाहमेतर्हि प्रणप्तृननुभवामीति। तस्मादिन्द्रियेभ्योऽर्थेभ्यः संघाताच्चार्थान्तरमात्मेति॥

## प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्॥१९॥

चेष्टया परस्य प्रवृत्तिं निवृत्तिञ्चानुमाय ताभ्यां रागद्वेषावनुमिनोति, ताभ्यामपि सुखदुःखहेतुभावज्ञानस्य, तेन च परात्मनोऽनुमानम्। तदेवं चेष्टानुमिता प्रवृत्तिर्निवृत्तिश्च परत्रात्मनि लिङ्गं भवति इति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये तृतीयस्याध्याय स्याद्यमाह्निकम्॥

---

## द्वितीयमाह्निकम्।

मनोगतिरात्मनोलिङ्गमिति वक्तुं मनः परीक्ष्यते,—

**आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावाभावश्च मनसोलिङ्गम्॥ १॥**

स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहसुखादिप्रत्यक्षेच्छादयश्चेति चार्थः। आत्मना इन्द्रियाणां तेषामर्थस्य सन्निकर्षे सत्यपि न युगपदुत्पद्यन्ते सर्वेन्द्रियनिमित्तानि ज्ञानानि। किन्तु किञ्चिदिन्द्रियनिमित्तमेव ज्ञानमुत्पद्यते। तेनानुमीयते; अस्ति किञ्चिन्निमित्तान्तरं यस्यासन्निधानात् ज्ञानं नोत्पद्यते सन्निधानाच्चोत्पद्यते इति। सोऽयं ज्ञानस्य भावोऽभावश्च मनसोलिङ्गम्। तच्चैतत् येनेन्द्रियेण सन्निकृष्यते तदिन्द्रियनिमित्तं ज्ञानमुत्पद्यते, येन त्विन्द्रियेण न सन्निकृष्यते तदिन्द्रियनिमित्तं ज्ञानं नोत्पद्यते इति।

स्मृत्यादयश्च न घ्राणादिनिमित्ताः, घ्राणाद्युपरमेऽपि गन्धादिस्मृत्याद्युपलब्धेः। न चानिमित्ताः स्मृत्यादयइति यदेषां निमित्तं तन्मनइति। सुखाद्युपलब्धिः खल्वपि करणजन्या भवितुमर्हति रूपाद्युपलब्धिवत् तच्च करणं मनइति। यथा घ्राणेन रसोन गृह्यते इति करणान्तरं रसनं, घ्राणरसनाभ्यां रूपं न गृह्यतेइति करणान्तरं चक्षुः। एवं सर्वत्र। तथा घ्राणादिभिः सुखादयोन गृह्यन्ते इति करणान्तरं मनः। तत्प्रत्याख्याने सर्वत्रैवं प्रसङ्गः। अथ सुखाद्युपलब्धेः करणं प्रत्याख्यायते,

गन्धाद्युपलब्धेरपि करणान्यविशेषात् शक्यन्ते प्रत्याख्यातुमिति सर्वत्र प्रत्याख्यानं प्रसज्यते। नियमश्च निरनुमानः। यस्य नियमो गन्धाद्युपलब्धिः करणनिमित्ता न सुखाद्युपलब्धिरिति, सोऽयं निरनुमानः। नात्र किञ्चिदनुमानमस्ति यतोनियमप्रतिपत्तिर्भवति। घ्रातुर्घ्राणसाधनवत्तु मन्तुर्मतिसाधनोपपत्तिः। यथा घ्रातुर्घ्राणसाधनानि घ्राणादीनि तथा मन्तुर्मतिसाधनं मनइति। घ्राणेन खल्वयं घ्राता गन्धं जानीते, रसनेन रसं, चक्षुषा रूपमित्यादि यथाविषयं वेदितव्यम्। एवं मनसा सर्वं मन्यते इति। तच्चैतत्सर्व्वविषयं मनोघ्राणादिकन्तु प्रतिनियतविषयमिति॥

**तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते॥२॥**

मनोहि प्रागुत्पन्नं सदाविमोचमनुवर्त्तते। तच्चैतन्मनः,—

**प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम्॥३॥**

न युगपत्प्रयत्नाउत्पद्यन्ते, न युगपज्ज्ञानान्युत्पद्यन्ते, यस्य सन्निधेरसन्निधेश्च तयोरुत्पत्तिरनुत्पत्तिश्च, तन्मनः प्रतिशरीरमेकं न नाना। न खल्वपि ज्ञानस्य भावाभावेनानुमितं मनोनाना भवितुमर्हति। नानात्वे तु मनसोऽनेकैरिन्द्रियैरेकदा सन्निधानोपपत्तेर्युगपज्ज्ञानानि प्रयत्नाश्चोत्पद्येरन्। नानैव मनांस्येकैकस्मिन्निति तेषां द्वित्राणां सन्निधेर्द्वित्राणि ज्ञानानि कदाचिदुत्पद्यन्ते दीर्घशष्कुलीभक्षणादाविति प्रावादुकानां दृष्टिभिः स्थिष्णवत मुञ्चेरन्निति लाघार्य्यस्य प्रवृत्तिरिति। युगपदनेकक्रियोपलब्धेर्नेति चेन्नालातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात्। एका खलु नर्त्तकी करचरणादीनि चालयति गायति भ्रमति शृणोत्यातोद्यजान् शब्दान् स्मरति गेयं पदं नृत्यस्याभिमतमिति तेषां

क्रमोऽगृह्यते, क्रमस्याग्रहणात् युगपदेताः क्रिया इति। तच्च नैवम्। कस्मात्? यस्मादलातस्य संभ्रमतः खल्वाशुसञ्चाराद्विद्यमानः क्रमोऽयथा न गृह्यते, क्रमस्याग्रहणाच्चाविच्छेदबुद्ध्या चक्रवद्बुद्धिर्भवति। एवं मनसोऽप्याशुसञ्चाराद्बुद्धीनां क्रियानाञ्च विद्यमानः क्रमो न गृह्यते क्रमस्याग्रहणात् युगपद्भवन्तीत्यभिमन्यते। तस्मादुत्पलशतपत्रभेदवन्नर्त्तकीकरचरणादिषु क्रियायौगपद्योपलब्धिरिति। छिन्नवृश्चिकादिशकलानाञ्च या क्रिया, सेयं खड्गाद्यभिघातादुत्पद्यते न प्रयत्नादिति। एतेनाविर्भवं व्याख्यातम्। आत्मप्रतिपत्तिहेतूनां मनसि सम्भवइतिचेत् ज्ञातुर्ज्ञानसाधनवन्मन्तुर्मतिसाधनोपपत्तेः संज्ञाभेदमात्रम्। ये खल्वात्मनः प्रतिपत्तौ हेतवस्ते मनसि सम्भवन्तीति मनएवात्मा स्यात्। एवमपि यथा ज्ञातुर्ज्ञानसाधनानि घ्राणादीनि, तथा मन्तुर्मतिसाधनमन्यदुपपद्यते। तस्मात् संज्ञाभेदमात्रं न त्वर्थे विवादः। येयं मन्तुरात्मसंज्ञा सा न मृष्यते, मनःसंज्ञा त्वभ्यनुज्ञायते। या च मतिसाधनस्य मनःसंज्ञा, सा न मृष्यते मतिसाधनसंज्ञा त्वभ्युपेयते इति। सति च मनसि,

**प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनोलिङ्गानि॥४॥**

शरीरान्तश्चारिणोवायोर्यत्प्राणपचाननं तेनानुमीयते अस्त्यात्मा यस्तिर्य्यग्गमनस्वभावं वायुमूर्द्ध्वमधश्चानयतीति। संमूर्च्छनादिति चेन्नापाने तदभावात्। अथ मन्येत, संमूर्च्छितः खल्वान्तरोवायुरूर्द्ध्वमनितीति। तच्च नैवं मन्तव्यम्। कस्मात्? अपाने तदभावात्। अधः खल्वेषोऽनिति नोर्द्ध्वम्। न चैतत्प्रयत्नमन्तरेणोपपद्यते इति। अक्षिपक्ष्मणी

येन संयुज्येते तदुन्मेषः, येन च संयुक्तयोस्तयोर्विभागः तन्निमेषः। ते खल्वेते निमेषोन्मेषकर्मणी यस्य प्रयत्नादुत्पद्येते, सोऽयमर्थान्तरभूत-आत्मा। अचेतनस्य दारुपुत्रकस्य नर्त्तनं चेतनकारितं दृष्टमिति। जीवनञ्चाध्यात्मिकवायुसंबन्धोनियतसहभावादात्मनोहेतुः। न खल्वन्यत्र शिलादौ तदुपलब्धिरिति। जीवनकार्य्यं खल्वपि वृद्धिक्षतसंरोहणादिकमचेतनेष्वदृष्टं चेतनस्यानुमितौ हेतुर्भवति। मनसश्चेन्द्रियविशेषे योऽयं सन्निधिर्ज्ञानोत्पत्तिहेतुः स मनसोगतिविशेषादुत्पद्यते। प्रणिधाय खल्वयं ज्ञाताऽभिमतेष्विन्द्रियेषु मनः प्रेरयति, उदवसितान्तः पृथुकइवाभिमतप्रदेशेषु कन्दुकम्, अथाभिमतं जानीते इति।

शरीरेण च खल्वात्मनः संबन्धे सति पुरुषः प्राणिति अपानिति निमिषत्युन्मिषति जीवति मनश्चाभिमते प्रदेशे गमयति। आत्मनस्तु संबन्धस्यापगमे न प्राणिति नापानिति न निमिषति नोन्मिषति न जीवति न मनोगमयति। तस्मादेभिरनुमीयते अस्त्यात्मा यत्संबन्धादेते भवन्तीति। इन्द्रियान्तरविकारः खल्वपि। कस्यचिदम्लरसस्य फलस्य गृहीत साहचर्य्ये रूपे गन्धे वा चक्षुषा घ्राणेन वा गृह्यमाणे इन्द्रियान्तरस्य रसनस्य योऽयं विकारः—नियतसहचरितेन रूपेण गन्धेन वा गृह्यमाणेन रसानुस्मृतौ रसगर्द्धिप्रवर्त्तितोदन्तोदकसंप्लवः प्रवर्त्तते तदात्मनोलिङ्गम्। गृहीतसाहचर्य्यं रूपं गन्धं वा गृह्णन् खल्वयमात्मा रसमनुस्मरति। तच्चानुस्मरतोरसगर्द्धिः प्रवर्त्तते। ततोरसनस्य विकारइति। अर्थेन्द्रियाणि चेतयन्ते, नायमिन्द्रियान्तरविकारउपपद्यते। न खल्वन्यदृष्टमन्यः स्मरतीति। संघातोऽपि न पूर्वापरयोरेकोऽस्तीति। सुखदुःखेच्छाद्वेषप्रयत्नास्तु ज्ञानवद्व्याख्याताः॥

**तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥५॥**

तदेवं सिद्धमात्मनोऽनुमानम्। अतः परं प्रावादुकानां दृष्टयः प्रदर्श्यन्ते। तत्रात्मनोऽनुमानमसम्भवं मन्यमानः कश्चिदाह। न वै खल्वात्मा शक्योऽनुमातुम्। यस्मात्,

**यज्ञदत्तइति सन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते ॥६॥**

यदा वै यज्ञदत्ते चक्षुः सन्निकृष्यते, तदाऽपि नात्मनः प्रत्यक्षं भवति। अतोनास्ति दृष्टं लिङ्गं येनायमात्मेत्यनुमीयेत। न च सामान्यतोदृष्टाल्लिङ्गादयमात्मेत्यनुमानं सम्भवतीत्याह,

**सामान्यतोदृष्टाच्चाविशेषः ॥७॥**

अस्ति किञ्चिदस्त्विति शक्यमनुमातुं न त्वस्त्यात्मेति ॥

**तस्मादागमिकः ॥८॥**

प्रतिषेधस्त्वस्य वायुपरीक्षायामुक्तः। आत्मनः प्रत्यक्षाभावमसहमानापरआह,—

**अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ॥९॥**

अहमिति योऽयं प्रत्ययस्तत्र शब्दस्य व्यतिरेकोभवति। शब्दात् खल्वसौ व्यतिरिच्यते। तस्मादहमिति यज्ज्ञानं नैतदागमिकं भवति। सोऽयं प्रत्यक्षएवात्मा नागमिकोन खल्वप्यनुमेयइति। अथापि खल्वयमात्मा प्रत्यक्षोऽप्यनुमेयः स्यादित्यतआह,—

**यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्तइति ॥१०॥**

यदि इन्द्रियेणासौ गृह्यते अहं देवदत्तोऽहं यज्ञदत्तइति प्रत्यात्मं, न तर्ह्यात्मनइदानीमनुमानं भवति। यदि प्रत्यक्षोऽयमात्मा, किन्त्वा-नुमानेनेति ।

अथापि खल्वात्मा नाम द्रव्यं नागमिकम्। कस्मात्? अह मिति शब्दस्य व्यतिरेकात्। किन्त्वहं देवदत्तोऽहं यज्ञदत्तइत्यन्यचं दृष्ट-मिति। अथापि खल्वात्मद्रव्यमहमिति शब्दस्य व्यतिरेकान्नागमि-कम्। यदि अहं देवदत्तोऽहं यज्ञदत्तइत्यन्यचं दृष्टमात्मा नाम द्रव्यं, कथमिदानीमागमिकं स्यादित्यपरोहेतुस्तचैव प्रवर्त्तते। महत् खल्वेतद-पसेविवेचित्र्यमाचार्य्यस्येति। अथास्य प्रतिषेधः। न वै खल्वयमात्मा प्रत्यक्षः। किन्तु,—

**हृष्ट्यात्मनि लिङ्गे एकएव दृढ़त्वात् प्रत्यक्षवत्प्रत्ययः॥१९॥**

यदिदमात्मनि लिङ्गं दृश्यते ज्ञानप्रभृतिकम्, तस्मिन् लिङ्गे सति अनुमानमेकएव प्रत्ययोभवति, न प्रत्यक्षमनुमानञ्चेति द्वयमात्मनि प्रवर्त्तते। स खल्वयं दृढ़त्वात्प्रत्यक्षवदवभासते, न त्वेतत्प्रत्यक्षमिति।

विप्रतिपत्त्युपलब्धेश्चाप्रत्यक्षः। नायमात्मा प्रत्यक्षः। कस्मात्? विप्रति-पत्त्युपलब्धेः। उपलभ्यते खल्वात्मनि विप्रतिपत्तिरस्ति नास्तीति। येऽप्यहं प्रत्ययमाश्रिषत, तेऽपि केचिन्नास्तित्वमात्मनः संघातव्यतिरिक्तस्य प्रतिजा-नते। न खलु प्रत्यक्षे कश्चिद्विप्रतिपद्यते इदमस्ति नास्तीति। तस्मादहम-न्धोऽहं वधिरोऽहं स्थूलोऽहं गौरइति संघातएवाहंप्रत्ययविषयोन तद्व्य-तिरिक्तआत्मा। योऽपि अहमिहैवास्मि सदने जानानइति प्रत्ययः, सोऽपि व्यापकस्यात्मनः प्रादेशिकत्वानुपपत्तेर्गौरोऽहं जानामीतिवत्संघातालम्ब-नोभ्रमएव। तत्रैव ज्ञानमपि कयाचिद्विवक्षया मन्यते इति। वाक्य-

स्थाविरशरीरभेदेऽपि यत्सोऽहमित्येकत्वप्रतिसन्धानम्, तदपि सएवायं हस्त्रइतिवत्संघातविषयमेव कयाचिद्विवक्षयेति। परीक्षकाश्च खल्वे-तदात्मविषयं प्रतिसन्धानं मन्यन्ते, न लौकिकाः। ते हि संघातमेव तथा प्रतियन्ति इति।

भवन्नप्ययमात्मनि प्रत्ययोन पृथिव्यादिवदात्मानं गोचयति। योऽयं प्रतीयते, सोऽयं संघातइन्द्रियमन्योवेत्यहंप्रत्ययवतामपि विमर्शोप-लब्धेः। तस्मादनुमेयश्रात्मा न प्रत्यक्षइति। यथा खल्वयं दूरादुपल-भमानोनावधारयात जलाशयोवा मरीचिका वा इति। ततोवला-कादिलिङ्गेनानुमिनोति योऽयं दूरादुपलभ्यते जलाशयोऽसाविति। तत्र यदनवधारणं ज्ञानं जलाशयोवा मरीचिका वेति, न तत्प्रत्य-क्षम्। तथैवाहमिति जानानोनावधारयति संघातं वा इन्द्रियाणि वा तद्यतिरिक्तं वोपलभे इति। तदेतदनवधारणं ज्ञानं न प्रत्यक्षमिति। तदुक्तम्। "तत्रात्मा मनश्चाप्रत्यक्षे" इति। "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्"—इति तन्त्रा-न्तरे चोक्तमिति। तच्चैतदात्मनः प्रत्यक्षं निरूपितेरभावादसत्कल्पं नात्रभवान् सूत्रकारोमर्शयाञ्चकार इ।त।

यश्च प्रत्ययोऽहंदेवदत्तोऽहंयज्ञदत्तइति, सोयम्,

## देवदत्तोगच्छति यज्ञदत्तोगच्छतीत्युपचाराच्छरीरे-प्रत्ययः ॥१२॥

शरीरं खल्वेकस्माद्देशाद्देशान्तरं गच्छति। उपचर्य्यते च देवदत्तो-गच्छति यज्ञदत्तोगच्छतीति। तस्मात् योऽयं प्रत्ययोऽहं देवदत्तो-ऽहं यज्ञदत्तइति, सोऽयं शरीरे प्रत्ययोन त्वात्मनि। शरीरे हि देव-

दत्तत्वादेरुपचारइति । देवदत्तत्वादिकं खलु शरीरमाश्रयति नत्वात्मानम् । तस्मादहं देवदत्तइत्येवमादिकः प्रत्ययः शरीरे भवतीति । अत्रापरआह,—

**सन्दिग्धस्तूपचारः ॥ १३ ॥**

योऽयं शरीरे देवदत्तत्वादेरुपचारोनात्मनीति, स तु सन्दिग्धः । किमात्मनि चोपचारः शरीरे च, किं वा शरीरएवेति न निर्णयहेतुरस्ति । यथैव प्रतीयते देवदत्तोगच्छतीति, तथैव प्रतीयते देवदत्तोजानातीति । सन्देहाचानिर्णयस्तत्त्वस्य । तस्मात्,

**अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तर प्रत्यक्षः ॥ १४ ॥**

अहमिति योऽयं प्रत्ययः सखल्वर्थान्तरप्रत्यक्षः । यत् खलु शरीरादर्थान्तरमात्मा तत्प्रत्यक्षः । कुतएतत् ? प्रत्यगात्मनि भावात् परत्राभावाच । अहं जानामीति खल्वयं प्रत्ययः प्रत्यगात्मनि भवति शरीरे च न भवतीति । अस्य प्रतिषेधः,

**देवदत्तोगच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः ॥ १५ ॥**

योऽयमहङ्कारोऽहमिति प्रत्ययः, स तावच्छरीरप्रत्यक्षोनात्मप्रत्यक्षः । कस्मात् ? देवदत्तोगच्छतीत्युपचारात् । यथाहं जानामीति प्रत्येति, तदप्यात्मनोधर्म्मं ज्ञानं तत्संवन्धाच्छरीरेऽभिमन्यते । स्थूलोऽहं सुखीतिवत् । पुनरपरआह,—

**सन्दिग्धस्तूपचारः ॥ १६ ॥**

देवदत्तोगच्छतीति किं शरीरसंबन्धादात्मनि गतेरुपचारः, आहो-स्विद्गच्छति शरीरे आत्मसंबन्धाद्देवदत्तत्वादेरुपचारः इति। सोऽयं सन्देहान्न तत्त्वनिर्णयाय कल्पते इति। सोऽयमनिर्णयहेतुं सन्देहमस-त्यदुपन्यस्यन्नहंप्रत्ययगोचरञ्चात्मानं प्रतिजानानोऽनवधेयवचनोभवती-त्युपेक्षितवानाचार्य्यः। निमीलिताक्षस्योपलब्धेरात्मनीति चेन्नान्यत्रापि-तदुपलब्धेः। अथ निमीलिताक्षोऽप्यहमित्युपलभते, सा चेयमुपलब्धि-रात्मनि विज्ञायते इति। तच्च न। यथा खल्वयं पुरुषोनिमीलिताक्ष-उपलभते जानाम्यहमिति, तथैव खल्वयमुपलभते स्थूलोऽहमिति। तस्मात् नेयमुपलब्धिरात्मन्येव शक्या विज्ञातुमिति। अस्तु तर्हि यत्र मुक्तसंशयं प्रत्यक्षं तदेव शरीरमात्मा, चक्षुषा ह्येतद्दृश्यत इत्यतआह,—

**नतु शरीरविशेषाद्यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः॥१७॥**

न वै खलु शरीरविशेषात् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विशेषेण व-ध्यते विशिष्यते इति। ज्ञानं यदि शरीरगुणः स्यात्, शरीरविशेषात्तः विशेषोभवेत्। शरीरगुणस्य रूपादेः खलु शरीरविशेषाद्विशेषोदृष्टः न त्वेतत् तथा भवति। यथा खल्वेकोरूपं रूपमिति जानीते, रस रसइति, परोऽपि तथेति नैतत् शरीरस्य गुणः, किन्त्वर्थान्तरस्यात्मन इति। स खल्वविशेषः सर्वत्रेति न तस्य गुणे विशेषः सम्भवति। असिद्धमि-तिचेन्न कारणवशात्। ज्ञानं खल्वपि यज्ञदत्तविष्णुमित्रयोर्विशिष्यते, यज्ञदत्तः खल्वयं प्रभूततरं जानाति शास्त्रं, स्मरति स्मर्त्तव्यस्य, शक्नोति चोहापोहौ कर्त्तुं; विष्णुमित्रस्तु न जानाति शास्त्रं, न स्मरति स्मर्त्तव्यस्य, न शक्नोत्यूहापोहौ कर्त्तुमिति। तत्रैवं सति यज्ञदत्तविष्णुमित्र-

योर्ज्ञानं न विशिष्यते इत्येतदसिद्धमिति । तच्च नैवं मन्तव्यम् । कस्मात् ? कारणवशात् । यदयं विष्णुमित्रोन जानाति शास्त्रं न स्मरति स्मर्त्तव्यस्य न शक्नोत्यूहापोहौ कर्त्तुमिति, करणदोषादेतद्भवति । कुतएतत्प्रतिपत्तव्यम् ? दर्शनात् । दृश्यते ह्युपदेशविशेषाद्यतमानः खल्वयमेव शक्नोति शास्त्राणि ज्ञातुं स्मर्त्तव्यस्य स्मर्त्तुमूहापोहौ च कर्त्तुमिति । कुतश्चिच्च कारणादुपहतकरणोयज्ञदत्तोऽपि तत्कालं न शक्नोति शास्त्राणि ज्ञातुं स्मर्त्तव्यस्य स्मर्त्तुमूहापोहौ च कर्त्तुमिति । तदेवमुत्तममध्यमाधमकरणवशाज्ज्ञानतारतम्यं न त्वात्मस्वभावभेदादिति । अथापि खल्वात्मधर्म्मोज्ञानं शरीरग्रहणे न गृह्यते, शरीरधर्म्मस्तु रूपादिकं गृह्यते, तस्मान्न शरीरमात्मा । ज्ञानं खल्वेवं शरीरस्य ग्रहणे रूपवद्गृह्येत इति । तदेवं संघातादर्थान्तरमात्मा । न तत्र प्रत्यक्षं नो खल्वप्यनुमानम् । प्रत्यक्षपूर्वकं खल्वनुमानमिष्यते । सामान्यतोदृष्टञ्चाविशेषः । तस्मादागमिकोऽयमात्मेति । तदेवं प्रावादुकानां दृष्टीरुपन्यस्य सिद्धान्तमाह,—

**अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः ॥ १८ ॥**

योऽयमहमिति प्रत्ययस्तस्य मुख्यआश्रयआत्मैव भवति । आत्मसंबन्धात्तु शरीरमपि तस्य कदाचिदाश्रयोव्यपदिश्यते, पादे मे वेदना सुखं वपुषीतिवत् । योग्यश्चास्य प्रत्ययस्यात्मा न शरीरादिः । आत्मा खल्वेतस्य प्रत्ययस्याश्रयोयुज्यते न शरीरादिः । कस्मात् ? तथा स्वभावात् । याहि स्वभावः शरीरादेर्यदेतदेतस्य प्रत्ययस्याश्रयोभवितुं न योग्यं, याच स्वभावआत्मनोयदेष योग्यइति । कारणाज्ञानात् कार्य्येषु ज्ञा-

नादज्ञानाच्च न शरीरादिकं प्रत्ययस्याश्रयोभवितुमर्हति। तदेवमह-मिति प्रत्ययादनुमीयते अस्त्यात्माऽर्थान्तरभूतइति। तत्र दृष्टान्तः शब्द-वदिति। यथा खल्वाकाशं शब्दस्य मुख्यं योग्यञ्चाश्रयः न पृथिव्यादिक-मेवमात्मा अहं प्रत्ययस्येति। कुतएतत्प्रतिपत्तव्यम्? व्यतिरेकाव्यभि-चारात्। यथा खलु शब्दः पृथिव्यादिष्वनुपलब्धेः पृथिव्यादिव्यतिरेकं न व्यभिचरति, तथाऽहमिति प्रत्ययोऽपीति। यथा खलु शब्दः पृथिव्यादि-ष्वनुपलब्धेः पृथिव्यादिव्यतिरिक्तस्याकाशस्यानुमितौ हेतुः, तथैवाहमिति प्रत्ययोऽपि व्यतिरिक्तमात्मानमनुमापयतीति। यथा च शब्दोऽव्यभिचा-रात् कारणभूतस्य वायोरनुमितौ हेतुः, तथा खल्वहमिति प्रत्ययोऽप्य-व्यभिचारात् कारणभूतस्यात्मनोऽनुमाने हेतुर्भवतीति। तदेवमहमिति प्रत्ययेनात्मानं गोचरयति, अनुमितौ त्वात्मनोहेतुर्भवतीति। अहमिति प्रत्ययान्नात्मा गम्यते इति ब्रुवाणमुपहसन्निवाहमिति मुख्ययोग्याभ्यामि-त्याह। सोऽयमहमिति प्रत्ययोनिदर्शनमात्रम्। प्रत्ययमात्रात्त्वात्मा अनु-मीयते। तस्मान्नागमिकआत्मादति।

स खल्वयमर्थान्तरभूतआत्मा किं सर्वशरीरेष्वेकआहोस्वित् प्रतिश-रीरं भिन्नइति। कुतः संशयः? उभयथोपपत्तेः। यदप्रत्यक्षं लिङ्गे-नानुमीयते, तत् खलु लिङ्गस्याविशेषे न विशिष्यते, एकस्यैवानुमानं भवति। अथापि खल्वेकः सुखी एकोदुःखी कश्चिदिभ्यः कश्चिद्रङ्कः कश्चिदनूचानः कश्चित् जाल्मः कश्चित् जायते कश्चिन्म्रियते चेति विरुद्धधर्माणामुपलब्धेः प्रतिशरीरमात्मनोभेदः स्यात्। सेयमुप-लब्धिर्यथाऽऽत्मभेदादुपपद्यते, तथैकस्यात्मनः प्रदेशभेदादुपपद्यते। स्फटिकः खल्वेकोऽपि महान् तैस्तैरुपाधिभिरुपरज्यमानस्तेषु तेषु प्रदेशेषु

लोहितनीलपीताद्यनेकप्रकारमुपलभ्यमानो दृष्ट इति । सेयं विरुद्धोपलब्धिः कालभेदवद्देशभेदेनैकस्मिन् युगपद्भवन्ती न शक्याऽपलपितुमिति । यथैकस्मिन् शरीरे घनसारकण्टकयोः सम्भेदात् देशभेदेन सुखदुःखयोरुपलब्धिः । मनस्त्वेकमिति विद्यमानस्य क्रमस्याग्रहणाद्युगपदुपलब्ध्यभिमानो भ्रमः । शरीरभेदे तु मनसोभेदात् न खल्वपि युगपदुपलब्धिर्न भवति । मनसः खल्वेते धर्मास्तदनुबन्धान्मिथ्याज्ञानाच्चात्मन्यवभासन्ते । सोऽयं संयोगो नानात्वं व्याप्य भवतीति । तदेवमुभयथोपपत्तेर्न ज्ञायते किमियमेकस्यात्मनः शरीरभेदादुपाधिनिमित्ता विरुद्धोपलब्धिरथानेकस्यात्मनः पारमार्थिकीति । उपाधिनिमित्तेयमुपलब्धिः । कस्मात् ? यस्मात्,—

**सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥**

सुखादीनां निष्पत्तिरात्मनो लिङ्गम् । तच्च न विशिष्यते । यथा खलु सदिति लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैको भावः, शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैकमाकाशम् । तथैव सुखदुःखज्ञाननिष्पत्तिलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैक आत्मा सर्वत्रेति । यत्र व्यवस्था विशेषलिङ्गमिति मन्यते । तच्च नैवम् । एकस्यापि व्यवस्थोपपत्तेः । तद्व्याख्यातम् । दृष्टं खल्वेकमाकाशं तेषु तेषु प्रदेशेषु तत्तत्शब्दादीनां सद्भावासद्भावाभ्यां तेन तेनोपाधिना भिन्नं परमार्थतो न भिद्यते इति । तदेतत् तत्त्वम् । व्यवहारभूमिकायां खलु,—

**व्यवस्थातो नाना ॥ २० ॥**

तदेतत्कृतभाष्यं पुरस्तादिति ॥

शास्त्रसामर्थ्याच्च ॥ २१ ॥

एकमेवाद्वितीयं, एकोदेवः सर्वभूतेषु गूढः, द्वितीयाद्वै भयं भवति, ब्रह्मैव सन् ब्रह्माप्येति, सर्वआत्मानएकीभवन्ति, तद्यइह रमणीयचरणाः, एतस्मादात्मनः सर्वआत्मानोव्युच्चरन्ति, द्वासुपर्णा इत्यादिशास्त्रसामर्थ्याच प्रतिपद्यामहे एकएवात्मा व्यवहारभूमौ भिद्यते इति।

एकएव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

स्मृतयश्चैवमाद्याभवन्तीति।

इति चन्द्रकान्तीये वैशेषिकभाष्ये तृतीयस्याध्यायस्य
द्वितीयमाह्निकम्॥

॥०॥ समाप्तश्च तृतीयोऽध्यायः ॥०॥

---

# अथ चतुर्थोऽध्यायः।

## प्रथमाह्निकम्

परीक्षितानि द्रव्याणि। तेष्वेव कश्चिद्विचारः प्रवर्त्तते। तत्र सद्-नित्यमित्यादिना अनित्यमिति द्रव्यगुणकर्मणामविशेषइत्युक्तम्। सर्व-स्वेदनित्यं यदेषां कारणं तदनित्यं तस्यापि यत्कारणं तदप्यनित्यं एवं तत्र तत्रेत्यव्यवस्था प्राप्नोति इत्यतआह,—

**सदकारणवन्नित्यम्॥ १॥**

यत् सदकारणवच्च भवति तत् नित्यमाख्यायते। सद्धि नात्यन्त-मुच्छिद्यते। रूपान्तरेणावस्थानात्। सच्च खलु स्वेन रूपेण प्राग-सदपि रूपान्तरेण सदेवोत्पद्यते। यच्चैतेषां कारणानां कारणं तत् खलु सदेव न कदाचिदसत्। कस्मात्? कारणादनुत्पत्तेः। यद्धि-कारणादुत्पद्यते, तत्कारणात्मना सदपि कार्य्यात्मना भवत्यसत्कदा-चित्। यत्तु कारणान्नोत्पद्यते अस्ति च, तत् खलु सर्वदैव सत् न कदाचिदसत्। तच्चैतत्कारणानां कारणं निमित्तविशेषात्तेन तेन रूपेण विपरिणममानं कार्य्यबुद्धिविषयः। तदेतत् प्रागुत्पत्तेरुत्पद्यमानं नासन्न सन्न सदसदसत्सतोर्वैधर्म्यात्। बुद्धिसिद्धन्तु तदसत्। दधि खल्वयं निष्पादयिष्यन् क्षीरमुपादत्ते। तच्च प्रयत्नेन तथा परिणमयति। अथ दधि निष्पद्यते। सोऽयमतिशयः क्षीरदध्नोरेव न दधिपयसोरिति। तदेतद्घटकपालादौ यथाविषयं वेदितव्यम्। तच्चैतत् क्षीरे केनचिद्रूपेण

सदपि दधिरूपेण त्वसदेवोत्पद्यते। बुद्ध्या खल्वेतत् सिध्यति। तदेवं कार्य्यकारणयोः संबन्धः कार्य्यस्योत्पत्तिश्चेति द्वयमुपपद्यते न त्वन्यथा। असंबन्धोत्पत्तौ सर्वत्र सर्वोत्पत्तिप्रसङ्गः। यश्च मन्यते, कार्य्यं खल्वेतत् न कारणेन संबध्यते ततउत्पद्यते चेति। तस्यासंबन्धाविशेषात् सर्वत्र सर्वस्योत्पत्तिः प्रसज्यते। शक्तिविशेषे चाभ्यनुज्ञा। अथ मन्येत वस्तु-शक्तिरेवैतादृशी यत्किञ्चित् किञ्चिदुत्पादयति न सर्वं सर्वमिति। एवं सति शक्तिविशेषे अभ्यनुज्ञा प्राप्नोति। ओमिति ब्रुवतश्चाभ्युपगम-विरोधः। तस्मात् घटकपालादावुपलब्धेः कारणविपरिणामः कार्य्य-मिति। मृत्पिण्डं हि तेन तेन रूपेण विपरिणममानं घटबुद्धि-मुत्पादयत् दृष्टमिति। तैलं खल्वपि सदेव निष्पीड्यमानात्तिलादु-त्पद्यते, तन्तवश्च तेन तेन रूपेणावस्थिताः पटमुत्पादयन्तीति। अनि-त्यमिति द्रव्यगुणकर्मणामविशेषइत्येतच्च मूलकारणं द्रव्यं विहाय मन्तव्यम्। परमात्मानञ्चापेक्ष्य सदप्यसद्भवतीति। अथापि खल्वस्ति किञ्चित्कारणं यस्य विपरिणामेनैतानि कार्य्याणीति कुतएतत् प्रतिपत्त-व्यम्? लिङ्गादित्याह,—

**तस्य कार्य्यं लिङ्गम् ॥ २ ॥**

कार्य्येण हि लिङ्गेन कारणमनुमीयते इति। यच्च परमं कारणं यदेतत् कार्य्यकाकारणभावप्रसङ्गस्यावधिभूतं तन्निरवयवम्। साव-यवानि खलु कार्य्याणि भवन्तीति। यथैतत् लोष्टस्य खलु प्रविभज्य-मानावयवस्याल्पमल्पतरमल्पतममुत्तरमुत्तरं भवति। स चाल्पाल्पतर प्रसङ्गोयस्मान्नाल्पतरमस्ति यः परमोऽल्पस्तत्र निवर्त्तते। सोऽयं पर-माणुरिति। स खल्वयं परमाणुर्मूर्त्तिमान् परिच्छिन्नोभवति द्वाभ्या-

ष्वाणुभ्यां पार्श्वद्वये संयुज्यमानस्तयोर्व्यवधानं करोति। सोऽयं स्पर्शवानणु-रण्वोर्व्यवधानहेतुरिति भागभक्तिरिति। स्पर्शवत्त्वादणुभ्यामणुभ्यां संयुज्यते तयोर्व्यवधानहेतुरिति तस्य भागभक्तिर्भवति। अणुसंयोगो हि नाश्रयं व्याप्य भवतीति। यदि कारणात्मना कार्य्यस्यावस्थानं, मूल-कारणं नित्यमिति सर्वं नित्यं स्यात्, ततश्चानित्यमिति द्रव्यगुणकर्म-णामविशेषोनोपपद्यते इत्यतआह,—

## कारणभावात् कार्य्यभावोऽनित्यइति ॥ ३ ॥

योऽयं कारणभावोभावानां स खलु नित्यः। कारणभावन्त्वपेक्ष्य योऽयं कार्य्यभावः सोऽयमनित्यइति। अतः कार्य्यभावविवक्षया अनित्य-मिति द्रव्यगुणकर्मणामविशेषइत्युक्तमिति ॥

## विशेषतः प्रतिषेधभावोऽविद्या ॥ ४ ॥

यश्च विशेषतः कारणभावप्रतिषेधोभावानां, कार्य्यं न जात्वपि कारणात्मना सदिति, सोऽयं प्रतिषेधभावोऽविद्या भ्रान्तिरिति। तदेव-माचार्य्यप्रवृत्तिर्ज्ञापयति अस्ति कारणभावः कार्य्यभावश्च भावानां, तयोः पूर्वोनित्यउत्तरश्चानित्यइति कारणस्य विपरिणामः कार्य्यमिति।

अथेयमपरा योजना। सदकारणवन्नित्यमिति नित्यं मूलकारण-माह। तस्य कार्य्यं लिङ्गमिति तत्रानुमानं प्रमाणमाचष्टे। कारण भावात् कार्य्यभावइति कार्य्ये गन्धाद्युपलब्धेः कारणेऽपि तदनुमिनोति। अनित्यइति विशेषतः प्रतिषेधभावइति अस्ति किञ्चिन्नित्यमित्यभ्य-नुजानाति। अविद्या इति सर्वमनित्यमिति प्रवादं प्रत्याचष्टे इति। अथापि खलु योविशेषतएकान्ततः प्रतिजानीते सर्वमेवानित्यं नास्ति

किञ्चिन्नित्यमिति, तस्यैतत् स्यात्; अनित्यमिति विशेषतः प्रतिषेध-भावोऽविद्येति।

यद्वै खल्वेतत् कारणानां कारणं, कुतएतन्नोपलभ्यते? नैतदनेक द्रव्यवत्। न चैतस्मिन् संस्कृतं रूपम्। तस्मान्नोपलभ्यते। यतः,—

**महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः॥५॥**

महत्युपलब्धिर्न सूक्ष्मे। सा चोपलब्धिरनेकद्रव्यवत्त्वात् रूपाच्च संस्कृताद्भवति न त्वन्यथा। यच्च कारणानां कारणं तदेतन्नानेकद्रव्य-वत्। न च तत्र रूपमस्त्यभिव्यक्तम्। अतोनोपलभ्यते। महत्त्वात् सिद्धिरिति चेत् तुल्यम्। अथ मन्येत, महत्त्वादुपलब्धिः सिध्यति दृत्यनेक द्रव्यवत्त्वमहेतुरुपलब्धाविति। तच्च नैवं मन्तव्यम्। तुल्यं खल्वेतद्भवति। यथा महत्त्वादुपलब्धिसिद्धिरित्यनेकद्रव्यवत्त्वमहेतुरेवमनेकद्रव्यवत्त्वा-दुपलब्धिसिद्धिरिति महत्त्वमहेतुरिति। तुल्यत्वाच्चोभयं हेतुर्भवति। न खल्विदं हेतुर्नेदमिति शक्यमध्यवसितुमिति। तद्भावाच्चोपलब्धेः। दूरात् खल्वयमुपलब्धा उत्कृष्टमहत्त्वमपि लूतातन्तुजालं नोपलभते, अनेकद्रव्यवत्त्वात्तु लूतामात्रमुपलभते। तदेवमनेकद्रव्यवत्त्वस्य भावा-दुपलब्धिर्भवतीत्यनेकद्रव्यवत्त्वमुपलब्धिहेतुरिति। अनेकद्रव्यवतः खल्वपि द्व्यणुकस्य महत्त्वाभावान्नोपलब्धिरिति। मध्यन्दिनोल्काप्रकाशस्य तु सौरेण प्रकाशेन बलवताऽभिभवान्नोपलब्धिरिति।

यस्तु मन्यते, गुणाएव लोहितशुक्लादयोद्रव्यस्योपलभ्यन्ते न द्रव्य-मिति। तं प्रत्युच्यते। न गुणमात्रं विवेकोपलब्धेः। न वै खलु गुणमात्र-स्योपलब्धिः किन्तु द्रव्यस्यापि। कस्मात्? विवेकोपलब्धेः। समानेऽपि स्थैर्य्य-शुक्लादौ योऽयमुपलब्धुर्जलस्थलविवेकः उपलभ्यते, स नोपपद्यते, यदि

न द्रव्यं प्रत्यक्षम् । अप्रत्यक्षं हि द्रव्यं गुणस्य समानइति । भवति त्वस्य विवेकोजलमेतत् स्थलञ्चेदमिति । यदि वै न भवेत्, स्थलवज्जलेऽपि विचरितुं प्रयतेत, जलवद्वा स्थलेऽपि नैवं कुर्य्यात् । न त्वेवम् । तस्मान्न गुणमात्रस्योपलब्धिरपि तु द्रव्यस्यापीति । अनुभवाच्च प्रतिपद्यामहे द्रव्यस्योपलब्धिर्भवतीति । सर्वः खलु लोकोऽनुभवति कालायससमानकान्तिं गर्जन्तं हस्तिनमुपलभेइति । यतोऽपसरति । न त्वेतत् द्रव्यस्यानुपलब्धावुपपद्यते । अथापि खलु गुणान्यत्वेऽपि प्रत्यभिज्ञानात् गुणव्यतिरेको-द्रव्यस्य । अथापि स्यात्, गुणसमुदायोद्रव्यं न तेभ्योव्यतिरिच्यते इति । एवं सति गुणान्यत्वे प्रत्यभिज्ञानं न स्यात् । अस्ति त्वेवं प्रत्यभिज्ञानं यएव पटः पूर्वं शुक्लआसीत् सएवेतर्हि रक्तोजातइति । तत् खल्वेतदेकं पूर्वापरकालावस्थायिनं गुणाश्रयं विषयीकुर्वद्गुणव्यतिरिक्तं द्रव्यं ज्ञापयति । यदि द्रव्यस्योपलब्धिर्भवति वायुर्नाम द्रव्यं कथं नोपलभ्यते इत्यतआह,—

**सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वयोरनुपलब्धिः ॥ ६ ॥**

महतोद्रव्यस्य वायोरस्त्यनेकं द्रव्यं, रूपसंस्काराभावात्तु न तस्योपलब्धिरिति । आचार्य्यप्रवृत्तिर्ज्ञापयति वायोः खलु रूपमस्ति संस्कारस्तु तस्य नास्तीति । वायोर्यदि रूपमस्ति, कुतएतन्नोपलभ्यते इत्यत आह,—

**अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः ॥ ७ ॥**

यत् खलु रूपमनेकद्रव्यवति समवैति यत्र च विशेषः संस्कारो विद्यते, तस्य रूपस्योपलब्धिर्भवति । वायोस्तु यद्रूपं, न तत्र संस्कारेऽस्तीति न तस्योपलब्धिरिति ॥

**तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम्॥ ८॥**

तेनेति सन्निकृष्टतरं विशेषं परामृशति। संस्कारेण खलु रसगन्ध-स्पर्शेषु ज्ञानं व्याख्यातमिति। यस्य गन्धोवायुनोपनीयते, तस्य संस्कार भावादेव द्रव्यस्यानुपलब्धावप्युपलब्धिर्भवति। अथापि खल्वियमुप-लब्धिः संस्कारं व्यभिचरति। पाषाणादौ रसगन्धयोरनुपलब्धेरिति। तच्च नैवं मन्तव्यमित्याह,—

**तस्याभावादव्यभिचारः॥ ९॥**

पाषाणरसगन्धादौ तस्य विशेषस्य संस्कारस्याभावात् नास्ति व्यभि-चारः। अव्यभिचाराच्च संस्कारोहेतुरुपलब्धारिति। संस्कारः खल्वयं कार्य्येणानुमीयते। न च पाषाणरसगन्धादौ तदनुमाने हेतुरस्ति। पाषाणभस्मनि तु संस्कारभावात्तदुपलब्धिरिति॥

**संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वा परत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि॥ १०॥**

संस्कृतरूपवद्द्रव्यसमवायाच्चाक्षुषाण्येतानि। तदभावान्न मूलकारण-स्यैतानि चाक्षुषाणीति। स्नेहस्तु गुणोन चाक्षुषः। कार्य्येण खल्वयमनु-मीयते। वेगः खल्वपि न चक्षुषा गृह्यते कर्मणा त्वनुमीयते इति। द्रवत्वन्तु चाक्षुषमपि न सूत्रितमसूत्रणादिति। तानि खल्वेतानि,—

**अरूपिष्वचाक्षुषाणि॥ ११॥**

स्पार्शनानि तु क्वचिद्भवन्ति। फुत्कारादौ खलु संख्यादीनामुपलब्धि र्भवति। दोषात्तु क्वचिन्न भवत्युपलब्धिरिति॥

**अतेन गुणत्वे भावे च सर्वैन्द्रियं ज्ञानं व्याख्यातम्**
**॥ १२ ॥**

गुणत्वं गुणभावः । भावस्त्वविशेषितोद्रव्यगुणकर्मणामिति । चक्षुषा गुणभावोविज्ञायते, स्पर्शनेन गुणभावोविज्ञायते । एवं शेषेषु । तदेवं सर्वैरिन्द्रियैर्गुणभावोविज्ञायते इति । एतेन भावोव्याख्यातः । अथापि गुणत्वं भावस्त्वार्थान्तरभूतं सर्वैन्द्रियनिर्ग्राह्यमिति योमन्यते, तस्यैतत् । एतेन सर्वैन्द्रियं ज्ञानं व्याख्यातमिति । नास्त्येतत् गुणत्वभावयोः सर्वैन्द्रियं ज्ञानमिति व्याख्यातम् । यदि वै स्यात्, नैव तत्र कश्चिद्वि-प्रतिपद्येत । न हि चक्षुर्विषये कश्चिद्विप्रतिपद्यते । प्रागेव तु सर्वैन्द्रियाणि ग्राह्ये । अथाप्येतदुक्तम् । सा चेयंप्रमितिः प्रत्यक्षपरा, जिज्ञासितमर्थमा-प्तोपदेशात् प्रतिपद्यमानोलिङ्गदर्शनेनापि बुभुत्सते, लिङ्गदर्शनानुमि-तन्तु प्रत्यक्षतोदिदृक्षते प्रत्यक्षतउपलब्धेऽर्थे जिज्ञासा निवर्त्तते इति । तस्मान्नास्ति तत्र सर्वैन्द्रियं ज्ञानमिति व्याख्यातम् । नह्येतत् तत्र तत्र समवैति । तत्र तत्र समवायाद्धि तत्तदिन्द्रियं ज्ञानमिति । यदि त्वेतदपि द्वयं तत्र तत्र समवेयात्, उपपद्यते सर्वैन्द्रियं ज्ञानमिति । अथापि खलु परिभाषामात्रं गुणत्वं परिभाषामात्रं भावः, ततो-विषयस्य सर्वैन्द्रियज्ञानाद्विषयिणि तस्योपचारः ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये चतुर्थस्याध्याय-स्याद्यमाह्निकम् ॥



## अथ द्वितीयमाह्निकम्।

परीक्षितं कारणद्रव्यम्। कार्य्यद्रव्यमिदानीं परीक्ष्यते,—

**तत्पुनः पृथिव्यादि कार्य्यद्रव्यं त्रिविधं शरीरेन्द्रिय विषयसंज्ञकम्॥ १॥**

चेष्टेन्द्रियार्थाश्रयः शरीरम्। घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि। शिष्टं विषयः। तत्र यदेतत् त्रिविधं कार्य्यद्रव्यं, तत् किं पञ्चभिर्भूतैरेकैकमारभ्यते, आहोस्विदेकैकमेकैकेनेति। कुतः संशयः? विशेषानुपलब्धेः। गन्धक्लेदादयस्तावदत्रोपलभ्यन्ते, ते किं भूतानां प्रकृतिभावात्तद्धर्मा उपलभ्यन्ते, आहोस्विदप्रकृतभावानां भूतानां संयोगस्याप्रतिषेधात् सन्निधेरिति नोपलभ्यते विशेषः। अतः संशय इति। किन्तत्र तत्त्वम्?

**प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते॥ २॥**

प्रत्यक्षाणामप्रत्यक्षाणाञ्च यः परस्परं संयोगः, स खलु न प्रत्यक्षः। कस्मात्? तदाश्रयाणामप्रत्यक्षत्वात्। प्रत्यक्षाणां खल्वेष प्रत्यक्ष इति। तस्मात् कार्य्यद्रव्यं न पञ्चात्मकं विद्यते। अप्रत्यक्षं हि तदेतत्स्यादिति। तदेवं न पञ्चभिरेकैकमारभ्यते, किन्त्वेकैकमेकैकेनेति। इतश्चैतदेवं प्रतिपत्तव्यम्,

**गुणान्तराप्रादुर्भावाच्च॥ ३॥**

यदि भूतपञ्चकोपादानकमेतत् स्यात्, अपूर्वः कश्चिद्गुणोहरिद्राचूर्णोपादानकद्रव्ये लौहित्यवदत्र प्रादुर्भवेत्। गुणान्तराप्रादुर्भावाच्च प्रतिपद्यामहे नैतत् पञ्चात्मकमिति। तदिदमनेकभूतोपादानं गुणान्तरवद्वा स्यात्, अगन्धमरूपमरसमस्पर्शञ्च वा प्रकृत्यनुविधानात् स्यादिति। अतएव,—

**न त्र्यात्मकम् ॥ ४ ॥**

प्रत्यचैः पृथिव्यप्तेजोभिरपि नैतदारभ्यते। गुणान्तरप्रादुर्भावाभावात्। प्रत्यचाप्रत्यचाणां संयोगस्याप्रत्यचत्वात्तस्य प्रतिषेधोन भवतीति। क्लेदादीनान्तूपलब्धिः शरीरादौ नोपपद्यते इत्यतआह,—

**अणुसंयोगस्त्वप्रतिषिद्धः ॥ ५ ॥**

न ब्रूमः सूक्ष्माणां पृथिव्यादीनां परस्परसंयोगोनास्तीति। अस्ति-त्वयं परस्परं संयोगः। तदेवं परस्परसंयुक्तानां भूयस्त्वात् पृथिव्यादिव्यपदेशमुपादानभावञ्चाचक्ष्महे, नत्वणूनां परस्परसंयोगं प्रतिषेधाम इति ॥

**तत्र शरीरं द्विविधं योनिजमयोनिजञ्च ॥ ६ ॥**

योनिरुत्पत्तिस्थानविशेषस्ततोजातं योनिजं, विपर्य्ययादयोनिजमिति। तत्राप्यादिशरीरमयोनिजमेव। पार्थिवन्तु योनिजमयोनिजञ्चेति द्विविधं भवति। योनिजं खल्वपि जरायुजस्वेदजाण्डजोद्भिज्जभेदाच्चतुर्व्विधम्। सेयं चतुर्विधा नियतोत्पत्तिस्थली योनिरित्याख्यायते। एताभ्यः खलु येषामुत्पत्तिस्ते भवन्ति योनिजाः। अथापि खल्वाभ्योऽन्याप्यस्त्युत्पत्तिस्थली अस्ति चायोनिजं शरीरमिति कुतएतत् प्रतिपत्तव्यम् ?

**अनियतदिग्देशपूर्वकत्वात्॥७॥**

नियतदिग्देशपूर्विका खलु जरायुजादीनामुत्पत्तिरयोनिजानान्तु अनियतदिग्देशपूर्विकोत्पत्तिरिति। मरीच्यादयः खल्वात्मभुवोमानसाः पुत्राः और्वश्चोरुजइत्येतेषां न नियता दिगस्त्युत्पत्तौ न नियतोदेशः। सेयमनियतदिग्देशपूर्वकोत्पत्तिस्थली अयोनिरित्युच्यते॥

**धर्मविशेषाच्च॥८॥**

योगसमाधिजाद्धर्मविशेषादयोनिजशरीराण्युत्पद्यन्ते। योगी खल्विच्छया कायव्यूहं निर्मिमीते इति॥

**समाख्याभावाच्च॥९॥**

यः खलु प्रजापतेर्मनसः प्रादुर्भूतः स दुर्वासाः, यश्चोरुतः सोऽयमौर्वः। या चेयं नारायणस्योरुदेशादुत्पन्ना, सेयमुर्वशी। भृगुर्भर्ज्जनात्, अङ्गिराअङ्गारात्, तत्रैव योऽयमर्चिषि जातस्तृतीयः सोऽयमत्रिरित्येवमादिका समाख्या भवति। समाख्याभावाच्च प्रतिपद्यामहे अस्त्यन्या उत्पत्तिस्थली, अस्ति चायोनिजं शरीरमिति। या चेयं जराय्वादिभ्योऽन्या उत्पत्तिस्थली, तस्याः खल्वयोनिरिति समाख्या भवति, न त्वेतस्याः पञ्चमी योनिरिति समाख्या भवतीति कुतएतत्?

**संज्ञायाआदित्वात्१०॥**

आदिः खल्वेषा संज्ञा, न त्वधुना क्रियते इति न तत्र पर्य्यनुयोगः। या चादिभूता स्वयम्भ्वादिसंज्ञा, तया ज्ञायते अस्त्ययोनिजं शरीरमिति। न वै स्वयम्भुर्जरायुजोन स्वेदजोनाण्डजोनोद्भिज्जइति। तस्मात्,—

**सन्त्ययोनिजाः॥११॥**

मरीच्यादयः। अयोनिजानां सद्भावे उक्ते अयोनेः सद्भावमुक्तं

मन्यते सूत्रकारः। न वै खल्वेतैरेव हेतुभिर्ज्ञायते अन्ययोनिजा इति, किन्तु,—

वेदलिङ्गाच्च॥ १२॥

प्रजापतिः खल्वात्मनः शुक्रमग्नौ हुतवान्। ततोऽर्चिषि ज्वालायां भृगुरुत्पन्नः। व्यपगते त्वर्चिषि योऽयमङ्गारेषु जातः, सोऽङ्गिराः। यश्च तत्रैव जातस्तृतीयः, सोऽयमत्रिः। अथापि खलु प्रजापतिरात्मनो-वपामुदक्खिदत्, तामग्नौ प्रागृह्णात्, ततोऽजस्तूपरउदगादिति। ब्राह्मणः खल्वपि प्रजापतेर्मुखादुदपद्यत, क्षत्रियो बाह्वोरुर्वोर्वैश्यः पद्भ्यां शूद्र इति।

आचार्य्यप्रवृत्तिर्ज्ञापयति स्वेदजादयोऽयोनिजा इति। महता खल्वसौ प्रयत्नेनायोनिजं शरीरं प्रतिपादयति, न त्वेतदनायासेन प्रतिपत्तुमर्ह-तीति मन्यते। सुकरा हि प्रतिपत्तिः स्वेदजादीनामिति। अथाप्ये-तदुक्तम्। द्विविधानीह भूतानि चराणि स्थावराणि च। चराणां त्रिविधा योनिरण्डस्वेदजरायुजा इति। स्थावराणां खल्वेकैव योनिरिति न तत्र विभागापेक्षेति चराणामेव योनिविभागमभिधत्त इति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये चतुर्थस्याध्यायस्य
द्वितीयमाह्निकम्॥

समाप्तश्च चतुर्थोऽध्यायः॥



## अथ पञ्चमोऽध्यायः।

परीक्षितानि द्रव्याणि। अथ गुणेषु परीक्षणीयेषु शरीरोत्पत्तिमूलत्वादल्पत्वाच्च व्युत्क्रमेण कर्मैव तावत् परीक्ष्यते। तत्रोत्क्षेपणादीन्युत्क्षेपणमधिकृत्याह,—

**आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १ ॥**

आत्मनः संयोगात् प्रयत्नाच्च हस्तस्योत्क्षेपणमुत्पद्यते। यतमानो हि हस्तमूर्द्धं क्षिपति। न चैतदात्मसंयोगव्यतिरेकेण हस्ते जायते इति॥

**तथाहस्तसंयोगाच्च मुषले कर्म ॥ २ ॥**

गुरुत्वाच्चेति चार्थः। उत्क्षेपणवता हस्तेन संयोगात् गुरुत्वाच्च मुषलस्योत्क्षेपणमुत्पद्यते। उत्क्षेपणवद्धस्तसंयोगात् खलु मुषले संस्कार आधीयते। ततोऽस्येतस्योत्क्षेपणं भवति। प्रयत्नेन खल्वयं हस्तेन मुषलमुत्क्षिपतीति। यत्पुनरन्तरेण प्रयत्नमुदूखलादिष्वभिहतं मुषलादिकमकस्मादुत्पतति, तदेतस्मिन्,—

**अभिघातजे मुषलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥ ३ ॥**

न हस्तसंयोगः कारणम्। कस्मात्? व्यतिरेकात्। यदा वै पुरुष ऊर्द्धमुत्तोलितं मुषलादिकमुदूखलादौ क्षिपन् त्यजति, तदाऽपि

खल्वेतदुदूखलाभिहतं उत्पततीत्यभिघातस्तत्र निमित्तं, न हस्तसंयोगो न खल्वपि प्रयत्नइति ॥

**तथाऽऽत्मसंयोगो हस्तकर्मणि ॥ ४ ॥**

तथोत्पतता मुषलेन संयुक्तोहस्तोयदुत्पतति, न तत्र प्रयत्नवदात्म संयोगः कारणम् । कस्मात् ? व्यतिरेकात् । किन्तु,

**अभिघातान्मुषलसंयोगाद्धस्ते कर्म ॥ ५ ॥**

उत्पतता मुषलेन संयुक्तस्य हस्तस्य मुषलमुखस्थलोहवत् यदुत्पतनं भवति, तत् खलु मुषलस्योदूखलाभिघातात् यः संस्कारस्तत्राधीयते तद्वता मुषलेन संयोगाद्धस्तेऽपि तदुत्पत्त्या उत्पद्यते । अवशोहि हस्तः सह मुषलेनोत्पततीति ॥

**आत्मकर्म हस्तसंयोगाच्च ॥ ६ ॥**

संस्काराच्चेति चार्थः। प्रक्रियाविशेषाद्धि वेगेनोत्पततोयन्त्रविशेषस्याधस्तात् दृढ़तरसंयुक्तहस्तः पुरुषोऽपि सह यन्त्रेणोत्पतति । तत्र खल्वात्मनि यदुत्पतनमुत्पद्यते, तदेतद्वेगवतोत्पतता यन्त्रेण हस्तस्य संयोगात् तदाहितसंस्काराच्चेति । एतेनाभिमन्त्रितकांस्यादिसंयुक्तहस्तस्यात्मकर्म व्याख्यातम् । अतएव,—

**संस्काराभावे गुरुत्वात् पतनम् ॥ ७ ॥**

दैवादन्तरिच्चे यन्त्रहस्तयोः संयोगस्योपरमे तेनैवात्मनः संस्कारो निवर्त्तते, अथ गुरुत्वात् पतनं भवति । यन्त्रस्य खल्वपि यावत् प्रक्रिया विशेषकारितः संस्कारोऽनुवर्त्तते तावत्तस्योत्पतनं भवति । संस्कारस्य

त्वभावे गुरुत्वात् सदैव पुरुषेणैतत् पततीति। अथापि खल्वेतत् संस्काराभावात् पतति न पुनरूर्द्धं न खल्वपि तिर्य्यग्गच्छति इति कुतएतत् ?

नोदनविशेषाभावान्नोर्द्ध्वं न तिर्य्यग्गमनम् ॥८॥

नोदनः संयोगविशेषः। तद्विशेषोहेतुरूर्द्धगमने, तद्विशेषश्च हेतु-स्तिर्य्यग्गमने। सोऽयम्,

प्रयत्नविशेषान्नोदनविशेषः ॥९॥

यथा खल्वयं प्रयतते तथैतत् संयुनक्ति। अथैतस्मात्,

नोदनविशेषादुदसनविशेषः ॥१०॥

भवति। उदसनमुपसर्पणम्। तदेवं हेत्वभावान्नोर्द्धं न खल्वपि तिर्य्यग्गमनं भवति, किन्तु गुरुत्वात् पतनम्। गुरु खल्वाकृष्यते पृथिव्येति ॥

हस्तकर्मणा दारककर्म व्याख्यातम् ॥ ११ ॥

यथा खल्वभिघातान्मुषलसंयोगाद्धस्ते कर्म, तथाभ्यन्तरेण वेगवता-वायुना संयोगात् दारकस्य करचरणादेः कर्म व्याख्यातम्। न त्वेतत् पुण्यपापयोर्हेतुरिति ॥

तथा दग्धस्य विस्फोटने ॥ १२ ॥

दह्यमानस्य वस्तुनोऽंशविशेषस्य विस्फोटनाख्ये तिर्य्यगूर्द्धगमनात्मके कर्मणि तथैव संयोगविशेषः संस्कारस्य हेतुः। सोऽयं संयोगविशेषोन प्रयत्नविशेषादुत्पद्यते किन्त्वग्निकारितइति ॥

## यत्नाभावे प्रसुप्तस्य चलनम्॥ १३॥

प्रसुप्तस्य हस्तादीनां यच्चलनं भवति, तत् खलु यत्नस्याभावे वायुसंयोगादिति। एतेन मूर्च्छितस्य हस्तादिचलनं व्याख्यातम्॥

## तृणे कर्म वायुसंयोगात्॥ १४॥

वायुना नीयमाने तृणे यत्कर्मोत्पद्यते, चलता वायुना संयोगात् तदुत्पद्यते इति॥

## मणिगमनं सूच्यभिसर्पणमदृष्टकारणम्॥ १५॥

यच्चैतत् तृणजातं तृणकान्तं मणिं गच्छति, यच्चायोऽयस्कान्तमुपसर्पति, तदेतददृष्टकारणं न तत्र दृष्टं कारणमस्तीति। किं पुनरत्रादृष्टम्? वस्तुशक्तिरेवैतादृशी यत्तेन तेन तत्तदाकृष्यते इति। अथापि खल्विषौ कार्म्मुकादिमुक्ते तरसा दूरं गच्छत्यनेकं कर्मेति कुतएतत् प्रतिपत्तव्यम्? संयोगविशेषादित्याह,—

## इषावयुगपत् संयोगविशेषाः कर्मान्यत्वे हेतुः॥१६॥

यदेतत् इषौ कर्मणामन्यत्वं भिदस्तत्र क्रमेण भवन्तः संयोगविशेषा हेतुरिति। तदेतत् कृतभाव्यं कर्म कर्मसाध्यं न विद्यते इत्यत्र। तस्मात्,

## नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरञ्च॥१७॥

आकृष्टया मौर्व्या नुन्नस्येषोः प्रथमं कर्मोत्पद्यते। कर्मणा संस्कारः

तस्मात् द्वितीयं कर्म। तथा तृतीयं चतुर्थमित्यादि यावत् कर्म वाच्यम्। एतेनालातभ्रमणं व्याख्यातम्। एवं गच्छतः खल्विषोः,—

**संस्काराभावे गुरुत्वात् पतनम्॥ १८॥**

तदेतत् कृतभाष्यं पुरस्तादिति। सोऽयमेकः संस्कारः प्राथमिकेन कर्मणोत्पद्यते, ततः कर्मसन्तानस्योत्पत्तिरिति। यावच्चासौ संस्कारो-नोपरमति तावदिषुर्गच्छति। स चायं संस्कारः क्रमेण ह्रसतीत्युत्तरः कर्मसन्तानः क्रमशोमन्दभावमापद्यते। संस्कारसन्तानस्य चोत्पत्तौ नत्वे तदेवं भवतीति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये पञ्चमस्याध्याय-स्याद्यमाह्निकम्॥



## अथ द्वितीयमाह्निकम्।

---

**नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥ १ ॥**

वाय्वादिभिराभ्यन्तरवस्तूनां नोदनादभिघाताद्वा तेषु कर्मोत्पत्तिः, वाय्वादिभिः संयुक्तैश्चाभ्यन्तरैर्वस्तुभिः संयोगात्तु पृथिव्यां कर्मोत्पद्यते कम्पन।ख्यं। अशब्दपूर्वं खलु पृथिवी कम्पते विपर्य्ययेण चेति ॥

**तद्विशेषेणादृष्टकारितम् ॥ २ ॥**

तच्चैतत् पृथिव्यां कर्म विशेषेणादृष्टैराभ्यन्तरैर्वस्तुभिस्तलद्भिः कार्य्यते। यद्वै खल्वन्यत् स्वाद्यं परितोभ्रमन्त्यां पृथिव्यां कार्मोत्पद्यते तद्विशेषेणा-दृष्टेन शक्तिविशेषेण कार्य्यते। वस्तुशक्तिरेवैतादृशी यदिदमित्थम्भूतं भवति। सूर्य्यमण्डलाकृष्टा खल्वियमेवमनिशं भ्रमतीति। परीक्षितं पृथिव्याः कर्म। स्थानवतामिदानीमपां कर्म परीक्ष्यते। तासां खल्वासाम्,

**अपां संयोगाभावे गुरुत्वात् पतनम् ॥ ३ ॥**

मेघगतानामपां वायुसंयोगत् कर्मोत्पत्त्या मेघसंयोगस्योपरमे प्रति-बन्धाभावात् गुरुत्वात् पतनं भवति। तदेतद्वर्षणमुच्यते। पतितानां खल्वपाम्,

## द्रवत्वात्स्यन्दनम् ॥ ४ ॥

द्रवाः खल्वापः पृथिव्यां पतिताः स्यन्दन्ते इति द्रवत्वं तत्र हेतुः । कुतः पुनरापोऽन्तरिक्षमारोहन्ति यतोमेघगतानामासां पतनरूपस्य वर्षणस्य निष्पत्तिरित्यतआह,—

## नाड्यवायुसंयोगादारोहणम् ॥ ५ ॥

योऽयं सूर्य्यरश्मिषु वायोः संयोगविशेषोभवति तासामूर्द्धगमनहेतुः, तस्मादपामन्तरिक्षारोहणं सम्पद्यते । अन्तरिक्षमारूढ़ाः खल्वापोधूमेन ज्योतिषा वायुना च संसृज्यमानाः मेघभावमापद्यन्ते इति । कथं सूर्य्यरश्मिषु वायुसंयोगादापऊर्द्धमारोहन्तीत्यतआह—

## नोदनापीड़नात् संयुक्तसंयोगाच्च ॥ ६ ॥

वलवता वायुना नोदनान्नाड्यआपीड्यन्ते ततस्तासामूर्द्धगमनं भवति । तथाभूतवायुसंयुक्ताभिर्नाड़ीभिः संयोगादपामूर्द्धमारोहणं सम्पद्यते । दृश्यते खल्वापः स्थालीस्थाः क्वथ्यमानावायुनुन्नवह्न्यंशैः संसृज्यमाना-ऊर्द्धमारोहन्तीति ॥

## वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ ७ ॥

वृक्षमूले सिषिक्ताः खल्वापोवृक्षमभितः सर्पन्ति । ततोहि वृक्षस्य पुष्टिर्भवति । यच्चैतदपां वृक्षाभिसर्पणं, तत् खल्वदृष्टेन शक्तिविशेषेण कार्य्यते । मूलमारभ्य यावदयं वृक्षनिविष्टः शिरासन्तानः शक्तिविशेषा दपां पार्थिवरसानाञ्चाकर्षणं करोति । वृक्षः खल्वेवं जीवतीति । या चेयं करका पतति, सेयम्,

अपां संघातः ॥ ८ ॥

शैत्यातिशयेन संहन्यमानाः खल्वापो मेघगताः करकाभावमापद्यन्ते । प्रत्यक्षं खल्वपां सङ्घातः शैत्यातिशयवशादुपजायमानो दृश्यते । हिम-विन्दूनाञ्च तुषारभावेन घनीभावः । या चापां प्रक्रियाविशेषाद्-घनीभावेन तुषारभावापत्तिः, साऽपि हिमर्त्तौ घृतादीनां घनीभाववत् शैत्यातिशयविशेषणोष्मणोऽवजयादेव भवति । उष्मणश्चावजयात् कर-कादिषु शैत्यातिशयोपलब्धिरिति । तच्चैतत् प्रत्यक्षतः प्रतिपत्तुमर्हतीति मन्यते भगवान् सूत्रकारः । न ह्येतत् केनचिदपदिश्यते इति । यदि मेघगतानामपां शैत्यातिशयविशेषात् करकाभावः, कथमिदानीमपां धारासम्पातइत्यतआह,—

विलयनञ्च तेजःसंयोगात् ॥ ९ ॥

तेजः संयोगादपां विलयनञ्च भवतीति तेजःसंयोगेन शैत्यविशेषा-वजयाद्विलीनानामपां द्रवीभावः, शैत्यातिशयविशेषेण तेजसोऽवजयाच्च करकाभावइति । अथापि खल्वपां संघातोविलयनञ्च तेजःसंयोगात् । अप्सु दिव्यतेजःसंयोगेन द्रवत्वप्रतिरोधात् करकोत्पत्तिरितरतेजःसंयो-गाद्विलयनमिति । अथापि खल्वस्ति मेघेषु तेजइति कुतएतत् प्रति-पत्तव्यम् ? लिङ्गादित्याह,—

तत्र विस्फूर्ज्जथुर्लिङ्गम् ॥ १० ॥

मेघगतास्वप्सु तेजःसद्भावे वज्रनिर्घोषोलिङ्गम् । न चैतावदेव लिङ्गं, किन्तु,

**वैदिकञ्च ॥ ११ ॥**

आपस्ताग्निं गर्भमादधीरन्निति वैदिकमप्यस्ति लिङ्गमिति। मेघगतास्वप्सु तेजःसंयोगाद्विष्फुर्ज्जथुरिति कुतः प्रतिपत्तिरित्यतआह,—

**अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥ १२ ॥**

तेजसा सम यो ऽयमपां संयोगस्तस्मात् स्तनयित्नोर्मेघाद्विभागाच्च विष्फुर्ज्जथुरुत्पद्यते। अद्भिः संयुक्तं स्तनयित्नोर्विभक्तञ्च तेजः सशब्दमधः पतति। प्रत्यक्षं खल्वेतदुपलभ्यते। तत्र यो ऽयं शब्दः स विष्फुर्ज्जथुराख्यायते। तत्संबन्धात्तेजःप्रतिपत्तिः। तेजश्चैतन्मेघगताभिः शैत्यविशेषात् संहताभिरद्भिः संसृज्यमानं तासां विलयनं करोति, विलीनाश्चापो वृष्टिभावेन पतन्ति। तच्चैतदपां संहतानां विलयनहेतुस्तेजोन खल्वपि सर्व्वाभिः संहताभिर्मेघगताभिरद्भिः संसृज्यते इति न सर्वासां संहतानामपां विलयनं भवतीति। तुषारस्य च विलयने तेजोविशेषसंयोगोहेतुरिति न वाह्यस्य तेजसः संयोगमात्रादसौ विलीयते। शैत्यविशेषेण तस्यावजयात्। सेयं वस्तुशक्तिर्न खल्वपि पर्य्यनुयोगमर्हतीति। परीक्षितमपां कर्म्म। तेजःप्रभृतीनां कर्म्मेदानीं परीक्ष्यते,

**पृथिवीकर्म्मणा तेजःकर्म्म वायुकर्म्म च व्याख्यातम् ॥ १३ ॥**

तद्विशेषेणादृष्टकारितमिति यत् पृथिवीकर्म्म, तेन तेजसोवायोश्च कर्म्म व्याख्यातम्। तदपि खल्वदृष्टेनैव शक्तिविशेषेण कार्य्यते इति।

**अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यक् पवनमणूनां मनसश्चाद्यं कर्म्मादृष्टकारितम् ॥ १४ ॥**

यथा खल्वग्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यग्गमनञ्चादृष्टेन कार्य्यते, तथैवाणूनां सूक्ष्माणां पृथिव्यादीनां मनसश्च यत् प्रथमं कर्म्म, तदप्यदृष्टेन कार्य्यते इति। अग्निवद्वायुवच्च सूक्ष्माणि पृथिव्यादीनि मनांसि चेत्यभूतशक्तिमत्येव स्रष्टा सृष्टानीति। परमाणूनां खल्वप्याद्यं कर्म्म, यतोद्व्यणुकादिक्रमेणैते लोकावभूवुस्तच्चादृष्टेन स्रष्टा कारितमिति। भोगसाधनञ्चैतत्सर्वं पुरुषस्येति पुरुषादृष्टेनाप्येतदुत्पत्तिनिमित्तमाद्यं कर्म्माणूनां कार्य्यते इति। एतेन मनसश्चाद्यं कर्म्म व्याख्यातम्। अनाद्यन्तु,

**हस्तकर्म्मणा मनसः कर्म्म व्याख्यातम्॥ १५ ॥**

यथा खल्वयं पुरुषइच्छन् यतमानोहस्तं प्रेरयति, तथैव तेषु तेष्वभिमतेषु प्रदेशेषु इदानीं मनोऽपि प्रेरयतीति। अप्रत्यक्षं वै मनोज्ञानायौगपद्यलिङ्गेनानुमीयते, कर्म्म तस्य केन लिङ्गेनानुमातव्यम्? कार्य्यलिङ्गेनेत्याह,—

**आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे॥१६॥**

आत्मा मनसा सन्निकृष्यते मनइन्द्रियेण इन्द्रियमर्थेन ततः सुखदुःखयोर्निष्पत्तिः। अभिमतं खल्वर्थं पश्यतः सुखं निष्पद्यते विपर्य्ययेण दुःखमिति। अणोर्वै मनसोन खल्वभिमतेनेन्द्रियेण सन्निकर्षोऽन्तरेण कर्म्म भवितुमर्हतीति मनसः कर्म्मणोऽनुमानमिति। यस्त्वायम्,—

**तदनारम्भआत्मस्थे मनसि शरीरस्य दुःखाभावः स योगः॥१७॥**

विषयान्तराद्व्युपरतस्य मनसोयदात्मनि स्थितिस्तस्मिन्नात्मस्थे मनसि तस्य मनसः कर्म्मणोऽनारम्भः। सोऽयं सार्वभौमश्चित्तस्य धर्मः शरीरस्य

दुःखाभावहेतुर्योगः। अथापि खल्वात्मस्थे मनसि शरीरस्य कार्य्यकरण-संघातस्य तस्य कर्मणोऽनारम्भोदुःखाभावहेतुर्योगइति। स खल्वयम-नेकशाखोबहुपरिकरस्तन्त्रान्तरसमाचारात् प्रतिपत्तव्यइति॥

अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्य्यान्तर संयोगाश्चेत्यदृष्टकारितानि॥१८॥

यदेतत् प्रायणकाले पूर्वस्माद्देहादात्माऽपसर्पति, देहान्तरञ्चाभिमत-मुपसर्पति, अशितपीतानाञ्च तेन तेन प्रक्रियाविशेषेण धात्वादिरूपेण परिणममानानां ये संयोगाः, तत्कारणानि यानि कर्म्माणि, ये च कार्य्यान्तरैः प्राणादिभिः शरीरादेः संयोगाः, तद्धेतुभूतं यत्कर्म, यच्चान्य-दित्यम्भूतं किञ्चित्, तानि सर्वाण्यदृष्टेन कार्य्यन्ते। निर्माणं खल्वीदृशं शरीरादीनां यत् तस्यां तस्यामवस्थायामेते भवन्तीति। अस्ति चान्य-ददृष्टं, यतः खल्वयं पुरुषोजीवति जायते च म्रियते चेति॥

तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः॥१९॥

तस्य हेतोरदृष्टस्याभावे शरीरेण सहात्मनः संयोगोन भवति। स खल्वयं भूत्वा न भवत्यात्मप्रहाणाच्चोपरमतीति। हेतोः खल्वभावात् शरीरान्तरेण न पुनरन्यः संयोगः प्रादुर्भवति। सोऽयं मोक्षः परमा मुक्तिर्विदेहकैवल्यं निर्वाणमिति। तत्त्वज्ञानाच्च मिथ्याज्ञानाद्युच्छेद क्रमेणास्य निष्पत्तिरिति तत्त्वज्ञानं मोक्षहेतुराख्यायते।

योवै खल्वयमन्धकारस्तस्य तावद् गतिः परीक्षितव्या। न वै खल्वन्ध-कारोद्रव्यं येनास्य गतिः स्यात्। किन्तर्हि?

## द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भाऽभावस्तमः ॥ २० ॥

यदेतत्तमस्तत् खल्वभावस्तेजसो न द्रव्यम् । कस्मात् ? द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यात् । तमसोद्रव्यवैधर्म्यात्, द्रव्यस्य येयं गुणकर्मणोर्निष्पत्तिस्तद्वैधर्म्याच्च तमसोगुणकर्मणोः । तमसः खलु रूपसंस्कार-उपलभ्यते स्पर्शस्तु नोपलभ्यते, नीलञ्च रूपमवादीनां वैधर्म्यम् । न खल्वपि तमसि रसगन्धौ गुरुत्वञ्चास्ति । बाह्यञ्चालोकमन्तरेणैतच्चक्षुषा गृह्यते नत्वेतत् स्पृश्यते । तदेतत् द्रव्यवैधर्म्यं तमसः । गुणकर्मणोः खल्वपि, द्रव्यस्य रूपं कारणगुणक्रमान्निष्पद्यते पाकाच्च, नत्वेवं तमसः । प्रयत्नादिभिः खलु कारणैर्द्रव्यस्य कर्मणोनिष्पत्तिर्न त्वेवं तमसः । द्रव्यस्य रूपं कर्म चालोकानुगृहीतेन चक्षुषा गृह्यते विपर्य्ययेण च विपर्य्ययो-विपरीतमेतत्तमसः इति । अथापि खलु द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भाऽभावस्तमइति कुतएतत् प्रतिपत्तव्यम् ? नह्ययं हेतुर्भाऽभावएव व्यवतिष्ठते । व्यवतिष्ठते इत्याह । कया युक्त्या ? द्रव्यं हि तेजः । तद्वैधर्म्यात् खल्वेतस्य भाऽभावत्वप्रतिपत्तिरिति । इतश्चैतदेवं प्रतिपत्तव्यम्,

## तेजसोद्रव्यान्तरेणावरणाच्च ॥ २१ ॥

प्रकाशस्वभावस्य तेजसो द्रव्यान्तरेणावरणाच्च प्रतिपद्यामहे भाऽभावस्तमइति । यदा वै द्रव्यान्तरेण तेजश्राव्रियते तदा खलु तमोगृह्यते । तच्चैतत्तेजसोऽभावोन द्रव्यम् । तेजोहि तदा न भवतीति । प्रत्यक्षं खल्वेतदुपलभ्यते । सूक्ष्मस्य तेजसः सम्भेदकृतस्तस्य तरतमभावइति । आवरकाव्यवस्थानादृगत्युपलब्धिः । येयं तमसोगत्युपलब्धिः, सा खल्वा-

वरकाव्यवस्थानादुत्पद्यते। द्रव्यान्तरेण वै तेजसश्चावरणात् तमउपलभ्यते। विपर्य्ययेऽनुपलब्धेः। तद्धेतत्तेजसश्चावरकं द्रव्यान्तरं न व्यवतिष्ठते। तस्मादावरकस्याव्यवस्थानात्तमसोगत्युपलब्धिर्भ्रान्तिस्तदन्वयव्यतिरेकानुविधानादिति। नीलरूपोपलब्धिस्त्वाश्रयकारिता वायुकारिता चेति। दिगादीनान्तर्हि कर्म्माणि परीक्षितव्यानीत्यतश्चाह,—

**दिक्कालावाकाशञ्च क्रियावद्वैधर्म्म्यान्निष्क्रियाणि. ॥ २२ ॥**

नैतेषां परिमाणावच्छेदोऽस्ति। महान्ति ह्येतानि। न खल्वपि क्रिया निमित्तमेषु शक्तिभेदोऽस्ति। आत्मा तु तथाभूतोऽपि मनसा संयुज्यमानः क्रियावानिव भवति व्यवहारभूमाविति॥

**एतेन कर्म्माणि गुणाश्च व्याख्याताः ॥ २३ ॥**

क्रियावद्वैधर्म्यात् गुणकर्मणोः क्रियाऽभावोव्याख्यातः। न ह्येषां मूर्त्तिरस्ति न संस्कारोन खल्वप्यदृष्टमिति। अथापि खल्वाचामभूदुदीच्यां तिष्ठति तदानीमरौत्सीदिदानीं भुङ्क्ते इत्याद्युपलब्धेर्दिगादयः क्रियावन्तः स्युः? नेत्याह,—

**निष्क्रियाणां समवायः कर्मभ्योनिषिद्धः ॥ २४ ॥**

कर्म्मणां समवायइत्यर्थः। यदि कर्मभ्योनिष्क्रियाणां समवायोनास्ति संयोगादयोगुणाः कथं कर्मणि कारणं स्युरित्यतश्चाह,—

**कारणन्त्वसमवायिनोगुणाः ॥ २५ ॥**

गुणास्त्वसमवायिनः कारणं नत्वेते कर्मणः समवायिकारणमिति॥

**गुणैर्दिग्व्याख्याता ॥ २६ ॥**

दिगसमवायिकारणं कर्मस्विति गुणैर्व्याख्यातम्। अवाच्यामभूदु-दीच्यां तिष्ठति इत्येवमादिका ह्युपलब्धिर्दिशोऽसमवायिकारणभावा-द्भवतीति॥

**कारणेन कालः॥२७॥**

कारणेनासमवायिकारणेन कालो व्याख्यातः। कालोऽप्यसमवायि कारणं कर्मस्विति तदानीमरौत्सीदिदानीं भुङ्क्ते इत्याद्युपलब्धि-र्भवतीति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये पञ्चमस्याध्यायस्य
द्वितीयमाह्निकम्।

समाप्तश्चायं पञ्चमोऽध्यायः।



## अथ षष्ठोऽध्यायः ।

प्रथमाह्निकम् ।

परीक्षितानि लौकिकानि कर्माणि। अलौकिकानि परीक्ष्यन्ते । वेदाच्चैषामवगतिः । धर्मवचनात्तस्य प्रमाणभावउक्तः । अथेदानीमियमपि,

**बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ १ ॥**

प्रमाणभावे लिङ्गम् । न वै शब्दः साक्षात् प्रमाणम् । प्रत्यक्षलैङ्गिक पूर्वकत्वात् । येयं वेदे वाक्यकृतिः सा खलु बुद्धिपूर्वा । वाक्यं हि बुद्धि पूर्वं क्रियते इति । पूर्वे खल्वृषयः साक्षात्कृतधर्माणोबभूवुः । ते चावरेभ्योऽसाक्षात्कृतधर्मभ्यः परं श्रेयउपदिदिशुः । स्वयं हि ज्ञातमर्थं परान् प्रतिपादयितुकामेन शब्दः प्रयुज्यते इति । अथापि खल्वियं बुद्धिपूर्वा वाक्यकृतिर्वेदे न त्वनादिरयं वेदराशिरिति कुतएतत् प्रतिपत्तव्यम्? प्रयत्नकार्य्यत्वाद्वचनस्य वाक्यान्तरवत् । यथा खलु वाक्यान्तराणि प्रयत्नकार्य्याणि, तथा वैदिकमपि वाक्यं प्रयत्नकार्य्यम् । न त्वनादिर्वेदराशिः । न खलु पौर्वापर्य्यभावोऽप्यनादिर्भवितुमर्हति इति । सति चैवमियमपि,

**ब्राह्मणे संज्ञा कर्मसिद्धिलिङ्गम् ॥ २ ॥**

या वै खलु ब्राह्मणे संज्ञा, ववरः प्रावाहणिरकामयतेत्येवमादिका, तया ज्ञायते, कर्माणि वेदाः पूर्वैर्ऋषिभिः कृतान त्वनादिरयं वेदरा-

ग्निरिति। न खलु प्रवहणस्य ववरस्य सोत्पत्तेः प्रागस्य सम्भवः। अकामयतेति भूतकालोपदेशात्। एवमन्यत्र। तच्चैतत्, कर्मैके तद्दर्शनादिति तन्त्रान्तरवचनात् प्रतिपत्तव्यमिति। अथापि खलु ब्राह्मणे यत् संज्ञायाः करणं छन्दांसि च्छदनादित्यादि, तद्वाक्यकर्तुर्बुद्धिसिद्धौ लिङ्गमिति। बुद्धिपूर्वायावाक्यकृतेर्निदर्शनम्,

## बुद्धिपूर्वाददातिः ॥ ३ ॥

स्वर्गकामोदद्यादित्यादिर्योददातिः स खलु बुद्धिपूर्वः। दानाद्वै स्वर्गस्य निष्पत्तिं बुद्धा खल्वेवं क्रियते वाक्यमिति। यथैतत्,

## तथा प्रतिग्रहः ॥ ४ ॥

बुद्धिपूर्वः। विषयेण विषयिणोग्रहणम्। अथापि खल्वयं बुद्धा वाक्यं चकार, न त्वन्यस्य बुद्धिरन्यस्य वाक्यकृतिरिति कुतएतत् प्रतिपत्तव्यम्?

## आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ॥ ५ ॥

अन्यस्यात्मनोगुणेन खल्वन्यस्मिन्नात्मनि हेतुभावं प्रतिपद्यते। अतोनान्यस्य बुद्धिरन्यस्य वाक्यकृतौ हेतुरिति। हितभूयस्त्वोपलब्धेरविप्रलम्भः। अथ कुतएवं न विज्ञायते, विप्रलम्भोऽसाविति। भूयसी खल्वत्र हितानामुपदेशउपलभ्यते। तस्मादनुमीयते नायं विप्रलम्भइति। क्लेशोत्सर्गानुपपत्तेश्च। विप्रलम्भार्थं स्वर्गादिफलकतया यागादिकं परिकल्प्य व्रतोपवासनियमादिभिरात्मानं क्लिश्नाति द्रव्यञ्च महता श्रमेणोपार्ज्जितमुत्सृजतीत्येतन्नोपपद्यते। तदनुपपत्तेस्तानुमीयते,नायं विप्रलम्भइति। प्रक्रियायास्तापूर्वत्वात्। अपूर्वा चैषा स्वर्गापूर्व-

यागादिप्रक्रिया न खल्वपि बुद्धिमारोहति। ततोऽनुमीयते, नैषा केन-चित्कल्पितेति। दृष्टानुरूपा हि कल्पना भवतीति। अथापि खल्वेकस्य कर्मणामनुष्ठाने न लन्यः फलमधिगच्छतीति कुतएतत् ? यदेतददृष्टं नाम गुणः फलहेतुः, सोऽयमात्मान्तरे कर्मतोभवन् न खल्वात्मान्तरे कारणं भवतीति। यच्चैतददृष्टं नाम गुणः फलहेतुः कर्मणोत्पाद्यते,

**तद्दुष्टभोजने न विद्यते ॥ ६ ॥**

योदुष्टं भुङ्क्ते, तस्य कृतमपि कर्म नैतस्योत्पत्तौ हेतुरिति।

**दुष्टं हिंसायाम् ॥ ७ ॥**

हिंसायां सत्यां यद्भोजनं तद्दुष्टं भोजनम्। अथापि खल्वेकोहिन-स्त्यन्योभुङ्क्ते, तत्र योऽयमन्योभुङ्क्ते, नैतस्य भोजनं दुष्टं स्यात्। नह्यसौ हिनस्ति। तत्र नैवं मन्तव्यमित्याह,—

**तस्य समभिव्याहारतोदोषः ॥ ८ ॥**

योऽयमन्योभुङ्क्ते, स खलु सत्यां हिंसायामभ्यवहरतीति तस्यापि दोषोभवति। यश्चापरोदुष्टं भुक्तवता संसृज्यते तस्यापि दोषोभवतीति।

**तददुष्टे न विद्यते ॥ ९ ॥**

यस्य प्राणिवधेन दुष्यति शास्त्रानुज्ञानात्, तस्मिन् शास्त्रानुज्ञा विषये प्राणिवधे भुञ्जानस्य भोजनं न दुष्टमिति। योवै कदाचित् दुष्टं भुक्तवान्, तस्य,

**पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥**

विशिष्टे शास्त्रानुमतभोजने प्रवृत्तिः कर्त्तव्या। एवं खल्वस्य दोष-उपशाम्यतीति। विशिष्टे प्रवृत्तेः खल्वसम्भवे,

**समे हीने वा प्रवृत्तिः॥ ११॥**

समे वा प्रवर्त्तेत हीने वा प्रवर्त्तेत न हिंसायामिति। अथापि खलु विशिष्टे प्रवृत्तेरसम्भवे समहीनयोरप्रवृत्तिः कर्त्तव्या। तदेतदनशनव्रत-मस्य दोषापगमायेति।

**एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम्॥ १२॥**

यदेतत् परस्मात् स्वस्य धनस्यादानं, तदेतेन व्याख्यातम्। समहीनाभ्यां न प्रतिग्रहीतव्यं किन्तु विशिष्टधार्मिकेभ्यइति। अथापि खलु विशिष्टधा-र्मिकेभ्यः प्रतिग्रहीतव्यं समेभ्योहीनेभ्यश्चेति यथोत्तरमपकर्षइति। यथैतत्,

**तथा विरुद्धानां त्यागः॥ १३॥**

शास्त्रनिषिद्धानां कर्मणां त्यागः कर्त्तव्यः।

**हीने परे त्यागः॥ १४॥**

यश्च परोऽग्निं गरं वा ददाति, धनं क्षेत्रं दारांश्चापहरति, शस्त्रेण च हन्तुं यतते, स चेदात्मनोहीनस्तस्य त्यागोविसर्गोवधः करणीयइति।

**समे आत्मत्यागः परत्यागोवा॥ १५॥**

सोऽयं परोयद्यात्मनस्तुल्योभवति, तदा परस्यात्मनोवा त्यागः कर्त्तव्यः।

**विशिष्टआत्मत्यागइति॥ १६॥**

तत्राप्यात्मनस्त्यागोविशिष्यते इति। अथापि खलु स यदि परः स्वस्माद्विशिष्टोभवति, तदाऽऽत्मैव त्यक्तव्यइति।

इति चन्द्रकान्तीये वैशेषिकभाष्ये षष्ठस्याध्यायस्याद्यमाह्निकम्।

## अथ द्वितीयमाह्निकम्।



दृष्टप्रयोजनानि कृषिवाणिज्यादीनि अदृष्टप्रयोजनान्यश्वमेधादीनीति द्विविधानि कर्माणि। तेषां खल्वेषाम्,

**दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥ १ ॥**

यत्र दृष्टं न भवति प्रयोजनं, तत्राभ्युदयाय स्वर्गाय प्रयोजनं धर्माख्यमनुमातव्यमिति। अथापि खल्वलौकिकानां कर्मणां लौकिकवत् केषाञ्चित् दृष्टं प्रयोजनं ग्रामादि। शीघ्रं फलनिष्पत्तेः। इह खल्वेषां दृश्यते प्रयोजनमिति। केषाञ्चिदमुत्रफलानां न लिह प्रयोजनं दृश्यते। उभयेषाञ्चैषां यत्र शास्त्रदृष्टस्य प्रयोजनस्य ग्रामादेरभावः; वीतरागः पुरुषोयदैतत् प्रयोजनं न कामयते, तदा खल्वेषां प्रयोजनमभ्युदयाय भवत्यदृष्टाख्यमिति। अथादृष्टप्रयोजनानामुदाहरणम्,—

**अभिषेचनोपवासब्रह्मचर्य्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥ २ ॥**

अभिषेचनमभिषेकः स्नानं, पापादुपावृत्तस्य गुणैः सह वासः, उपस्थवशीकारः, गुरुकुले वेदस्याधिगमार्थं वासः, वनं प्रस्थितस्य यद्विहितं कर्त्तव्यं, अग्निहोत्रादिर्यज्ञः, हिरण्यादीनां दानं, व्रीह्यादीनां प्रोक्षणं, प्राच्यादयोदिशः, नक्षत्रमाधानादौ रोहिण्यादि, अघमर्षणादयोमन्त्राः,

पूर्वाह्णादिहृदगयनादिश्च कालः, समादिदेशनियमाः शौचादयोनियमाश्चैतत् सर्वमदृष्टाय भवति। न चैतावदेवादृष्टाय, किन्तु,

**चातुराश्रम्यमुपधाश्चानुपधाश्च ॥ ३ ॥**

चतुर्णामाश्रमाणां स्वस्वाधिकारं यद्विहितमध्ययनभिक्षाचर्य्यादि, यद्वैषामविशेषेण विहितं क्षमादि, याश्चोपधाः, याश्चानुपधाः, सर्वञ्चैतददृष्टायेति। तत्रोपधाऽधर्माय शिष्टं धर्मायेति विवेकः। तत्र,

**भावदोषउपधाऽदोषोऽनुपधा ॥ ४ ॥**

भावस्यात्मनोयोदोषः स भवत्युपधा। विपर्य्ययादनुपधेति। दोषः खल्वात्मनः पापं नास्तिक्यबुद्धिरश्रद्धा प्रमादश्चेत्येवमादिः। विपर्य्ययेणादोषइति। अथादृष्टनिमित्तान्तरम्,

**यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितञ्च तच्छुचि ॥ ५ ॥**

अदृष्टाय भवतीति प्रकृतम्। न वै विधानमात्रेण, द्रव्यस्य शुचिभावः किन्त्वेवमिति। यत्पुनरित्थम्भूतं न भवति, विहितमनुपहृतमपि नैव तत् शुचीत्याह,—

**अशुचीति शुचिप्रतिषेधः ॥ ६ ॥**

यन्न भवति शुचि, तदेतदुपहृतमनुपहृतं वा अशुचीति। न वै खलु विहितमनित्थम्भूतमेवाशुचि, किन्तु,

**अर्थान्तरञ्च ॥ ७ ॥**

अन्योऽर्थोऽर्थान्तरम्। विहितादन्योयोऽर्थः सोऽप्यशुचिर्भवति। तदेवं द्रव्यं गुणः कर्म चाशुचीत्याख्यायते। एते अर्थाइति। तत्र यत् द्रव्यं

यस्य भोजनादौ विहितं हविष्यान्नादि, ततोऽन्यन्मांसादि द्रव्यं तस्याशुचि। योगुणोयस्य विहितोमार्दवादिस्तद्विपर्य्ययस्तस्याशुचिः। यच कर्म यस्य विहितमध्ययनादि, ततोऽन्यत् स्तेयादिकं तस्याशुचीति। अथापि खल्वर्थस्य योऽयं दोषः, स भवत्युपधाश्रदोषोऽनुपधाद्दति। तच विपर्य्ययेणादावनुपधायाउदाहरणं, परस्तादुपधायाइत्ययं विशेषः।

**अयतस्य शुचिभोजनादभ्युदयोन विद्यते नियमाभावात् ॥ ८ ॥**

योऽयमयतः पुरुषः, स खलु स्नातः शुचिरपि यत् शुचि द्रव्यं भुङ्क्ते न तस्मादभ्युदयोभवति। कस्मात्? नियमाभावात्। यद्वै नियमेन क्रियते, तत् खल्वभ्युदयायेति। यमः खल्वानृशंस्यादिर्दशविधः। योवै यमोनियमः खलु सः। यमोऽपि यच्छतेर्नियमोऽपि। तस्मादयतस्य न नियमोविद्यते। नियमस्याभावाच्छुचिभोजनेऽपि न तस्याभ्युदयोभवतीति। अस्य प्रतिषेधः,

**विद्यते वाऽर्थान्तरत्वाद्यमस्य ॥ ९ ॥**

वा शब्दात् पक्षोविपरिवर्त्तते। योऽयमानृशंस्यादिरहितः, स खल्वयतः। तस्यायतस्यापि शौचादिनियमवतः शुचिभोजनादभ्युदयोविद्यते। कस्मात्? यमस्यार्थान्तरत्वात्। अन्यः खल्वर्थोयमोऽन्यस्यार्थोनियमः। तत्र, यमोदशविधश्चानृशंस्यादिर्नियमोऽपि दशविधः शौचादिरिति। तत्रायतस्य नियमाभावादिति यदुक्तं तदयुक्तम्। अथापि खलु यमोनियमस्येति द्वयं यच्छतेरेव, कस्मादर्थविशेषप्रतिपत्तिः? उपसर्गविशेषात् परिभाषातस्येति। यमस्यार्थान्तरत्वात्तदभावेऽपि निय-

मादभ्युदयोन खल्वपि नियमस्यार्थान्तरस्याभावे यमादिति कुतएतत् प्रतिपत्तव्यम् ?

**असति चाभावात् ॥ १० ॥**

सति भावाश्चेति चार्थः । असति शौचादिनियमे न भवत्यभ्युदयः सति च भवतीति न नियमाभावे यमादभ्युदयनिष्पत्तिः । नियमेन हि कृतमभ्युदयाय भवतीति । परीक्षितौ संसारमूलभूतौ धर्माधर्मौ । तन्निमित्तं दोषइदानीं परीक्ष्यते,—

**सुखाद्रागः ॥ ११ ॥**

स्रक्चन्दनाद्यासवनिमित्तात् सुखाद्रागोरञ्जनं पुरुषस्य । सुखनिमित्तेषु खल्वसौ रज्यतीति ।

**तन्मयत्वाच्च ॥ १२ ॥**

विषयाभ्यासनिमित्तः संस्कारविशेषः तन्मयत्वम् । तस्माद्यान्तरेणापि सुखाभिसन्धिमभ्यासवशादसौ रज्यतीति ।

**अदृष्टाच्च ॥ १३ ॥**

अदृष्टमपि शक्तिविशेषेण दृश्यते इति । तस्माच्च रागउत्पद्यते । यथोद्भिन्नतारुण्यस्य तरुण्यामनुरागइति । अथापि खल्वदृष्टादात्मगुणविशेषात् कश्चित् क्वचिद्रज्यतीति ।

**जातिविशेषाच्च ॥ १४ ॥**

जन्मनोयोविशेषस्तस्मात् खल्वपि रागउत्पद्यते । विशुद्धान्तराभ्यां मातापितृभ्यामुत्पन्नो विशुद्धेषु विषयेषु रज्यति, विपर्ययाद्विपर्ययेष्विति ।

एवमन्येऽपि जन्मनो विशेषात् उत्प्रेक्षितव्याः। द्वेषः खल्वपि तत्प्रत्यनीक भावाद्व्याख्यातः। सुखानुशयी रागो दुःखानुशयी द्वेषइति दुःखात् द्वेषः। तन्मयत्वाच्च। अदृष्टाचोपहतपुंस्त्वस्य द्वेषः कामिन्यामिति। जाति विशेषाच्च द्वेषो रागेण व्याख्यातः। तावेतौ रागद्वेषौ नान्तरेण मोह-मुत्पद्येते इति मिथ्याप्रतिपत्तिलक्षणस्य मोहस्य प्रतिपत्तिरिति,प्रवर्त्तना लक्षणादोषाः प्रतिपादिताभवन्ति। मुग्धोहि रज्यति द्वेष्टि चेति। तेषां मोहः पापीयान् नामूढ़स्येतरोत्पत्तेरिति तन्त्रान्तरे चोक्तमिति। तद्मे रागद्वेषमोहावक्रशाखाः तत्त्वैराग्यं रागद्वेषमोहार्थान्तरभावादिति तन्त्रान्तरसमाचारात् प्रतिपत्तव्याः। दोषेभ्यः खल्विदम्,

## इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः ॥ १५ ॥

सुखहेताविच्छाविशेषाद्रागात् तत्प्रतिषेधे द्वेषाच्च धर्मप्रवृत्तिः। सौन्दर्य्यादिनिमित्ताद्रागादामुष्मिकहिते द्वेषाच्चाधर्मप्रवृत्तिरिति। अथा-प्येतदुक्तम्। सत्यादप्यनृतं श्रेष्ठं धिक् स्वर्गं नरकोऽस्तु मे इति। अथापि खल्विच्छापूर्विका धर्मप्रवृत्तिर्द्वेषपूर्विका चाधर्मप्रवृत्तिरिति। द्वेषात् खल्वयमधर्मेषु परप्रमापणादिषु प्रवर्त्तमानः प्रमापयतीति। रागद्वेष निमित्ताभ्यां खलु धर्माधर्माभ्यां प्रेत्यभावनिष्पत्तिरिति तदुच्यते,

## तत्संयोगोविभागः ॥ १६ ॥

योऽयं धर्माधर्मनिमित्तः शरीरेन्द्रियबुद्धिवेदनाभिः संयोगः, स खलु विभागः। कस्मात्? तदवसानत्वात्। विभागावसानः खल्वयं संयोगोविभागइति व्यपदिश्यते वैराग्यार्थम्। अथापि खलु धर्माधर्म निमित्तः शरीरेन्द्रियबुद्धिवेदनाभिः संयोगोविभागश्चोपजायते पुरुषस्य।

देहादिभिः खल्वयं संयुज्यते, तदेतज्जन्म । संयुक्तश्च विभज्यते, तदेतत् संस्था मरणमिति । तावुभौ संयोगविभागौ यावदपवर्गमनिशमावर्त्त-मानौ प्रेत्यभावइति । तच्चैतत्, पुनरुत्पत्तिः प्रेत्यभावइति तन्त्रान्तर-समाचारात् प्रतिपत्तव्यम् । यदा खल्वयं म्रियते तदा प्रैति पूर्वशरीरं जहाति, प्रेत्य च भवत्युत्पद्यते, भूत्वा प्रैति, प्रेत्य पुनर्भवतीति । स चायं प्रेत्यभावोयावन्नोपरमति तावद्बन्धः पुरुषस्य । यत्र तु तस्योप मः, सोऽयम्,

आत्मकर्मसु मोक्षोव्याख्यातः ॥ १७॥

आत्मकर्मसु यमनियमादिषु सत्सु मोक्षोव्याख्यातः । तदेतत्, तदर्थं यमनियमाभ्यामात्मसंस्कारोयोगाच्चाध्यात्मविध्युपायैरिति तन्त्रान्तरे चोक्तमिति । तच्चैतदात्मकर्म बहुशाखमनेकपरिकरं तन्त्रान्तरतः प्रति-पत्तव्यमिति ।

इति चन्द्रकान्तीये वैशेषिकभाष्ये षष्ठस्याध्यायस्य
द्वितीयमाह्निकम् ।

समाप्तश्चायं षष्ठोऽध्यायः ।

---

# अथ सप्तमोऽध्यायः।

प्रथमाह्निकम्।

द्रव्यकर्मणी परीक्ष्य पारिशेष्याद्गुणान् परिचिचिषुर्विप्रकृष्टानमून् स्मारयति,

**उक्तागुणाः॥ १ ॥**

ते खल्विमे उक्तागुणाः परीक्ष्यन्ते, न समुच्चितात्रपि। कस्मात्? विप्रतिपत्तिभूयस्त्वाद्विपर्य्ययाच्च। विप्रतिपत्तिभूयस्त्वं खल्वेतेषु उपलभ्यते, विपर्य्ययोऽन्येषु। रूपादयोगुणाद्रव्यात्मानइत्येके। द्रव्याणीत्यन्ये। बुद्ध्यात्मानइत्यपरे। नैव सन्तीति केचित्। एवमपराअपि विप्रतिपत्तयउत्प्रेक्षितव्याः। अथापि खल्वेतेषु परीक्षितेषु समुच्चितानामन्येषां परीक्षामनयैव दिशा प्रतिपत्तुमर्हतीति मन्यते सूत्रकारः। तत्र,

**पृथिव्यादिरूपरसगन्धस्पर्शाद्रव्यानित्यत्वादनित्याश्च ॥२॥**

पृथिव्यादीनां रूपादयः स्पर्शान्ताः परिमाणादयश्च गुणाः तदाश्रयस्य द्रव्यस्यानित्यत्वादनित्याभवन्ति। उत्पत्तेः प्रभृत्याविनाशमनुवर्त्तमानः खल्वपि भावोऽनित्यएव। कस्मात्? द्रव्यानित्यत्वात्।

**एतेन नित्येषु नित्यत्वमुक्तम्॥ ३॥**

यदि द्रव्यानित्यत्वादनित्याः, नित्येषु तर्हि द्रव्येषु द्रव्यनित्यत्वान्नित्यत्वममीषामुक्तं भवति। तस्योदाहरणम्,

## अप्सु तेजसि वायौ च नित्याद्रव्यनित्यत्वात् ॥ ४ ॥

नित्यास्वप्सु नित्ये तेजसि नित्ये वायौ च रूपादयोनित्याः । कस्मात्? तदाश्रयस्य द्रव्यस्य नित्यत्वात् ॥

## अनित्येष्वनित्याद्रव्यानित्यत्वात् ॥ ५ ॥

अनित्येष्ववादिष्वप्यनित्याः, तदाश्रयस्य द्रव्यस्यानित्यत्वात् । अथापि खल्वन्येषां गुणानां परिमाणादीनामनित्येष्वनित्यत्वं सूत्रार्थः । अथापि खल्वप्सु तेजसि वायौ च नित्ये द्रव्यनित्यत्वाद्रूपादयोनित्याः, न पुनः पृथिव्यां नित्यायामपीति कुतएतत्? यतः,

## कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥

पृथिव्यां खलु पाकात् रूपरसगन्धस्पर्शान्तरमुत्पद्यते। तदिमे पाकजारूपरसगन्धस्पर्शाः कारणगुणपूर्वकाभवन्ति । अतोनित्यायामपि पृथिव्यामनित्यारूपादयइति । अवयविमात्रे तदुत्पत्तिरिति चेन्न प्रदेशेऽप्युपलब्धेः । अथ मन्येतावयविमात्रे पृथिव्यां रूपरसगन्धस्पर्शान्तराण्युत्पद्यन्ते न त्ववयवेऽपीति तच्च नैवं मन्तव्यम् ।कस्मात्? प्रदेशेऽप्युपलब्धेः। प्रत्यक्षं खल्वग्निसम्भेदादेकदेशेऽपि पृथिव्यारूपान्तरोत्पत्तिरुपलभ्यते, न त्ववयविन्यां महापृथिव्यामिति । अतोविज्ञायते, भवत्यवयवेऽपि तस्यारूपान्तरोत्पत्तिरिति । विभागे चोपलब्धेः । यत्र प्रदेशे रूपान्तरमुत्पद्यते, तस्य यावच्छक्यं त्वयशोविभागेऽपि रूपान्तरमुपलभ्यते। तस्मात् प्रतिपद्यामहे, भवति नित्यायामपि पृथिव्यां रूपान्तरस्योत्पत्तिरिति । कारणगुणपूर्वा खल्वमीषामुत्पत्तिरवगतेत्येतदपि कारणगुणपूर्वमित्यनुमीयते। यत्र त्वापाकनिहितानां शरावो-

दहनादीनामन्तस्तद्रूपाणामपि वाह्यतोरूपान्तरोत्पत्तिस्तत्र येष्वणुषु वह्निसंयोगविशेषस्तत्रैव तदुत्पत्तिर्न सर्वत्र। तेऽपि खल्वणवः कारण-मिति कारणगुणपूर्व्वैव तदुत्पत्तिरिति।

संयोगादिति चेद्धेत्वन्तरप्रतिषेधानुपपत्तिः। अथापि खल्वग्नि-संयोगादवयविनि रूपान्तरोत्पत्तिरिति चेत्, हेत्वन्तरप्रतिषेधानुप-पत्तिः। यद्यवयविनि रूपोत्पत्तावग्निसंयोगोहेतुः, कथमन्यस्य हेतोर-वयवरूपस्य प्रतिषेधउपपद्यते। तस्मादवयवस्य रूपान्तरोत्पत्तावग्नि-संयोगोहेतुः अवयविनि त्ववयवरूपमिति यथादर्शनमभ्यनुज्ञानमिति। सूक्ष्माणां खल्वपि दहनांशानां सच्छिद्रेषु द्रव्येष्वन्तःप्रवेशोभवति। अन्तःश्यामवाह्यलौहित्ययोः कल्पान्तरानुपपत्तेः। सेयं दहनांशस्यान्तः प्रवेशेन मूर्त्तान्तरस्येत्यननुयोज्या वस्तुशक्तिरिति। दहनांशानाम-न्तःप्रवेशाभावे त्वग्रादीनां प्रादेशिकान्तरौष्ण्योपलब्धिर्नोपपद्यते। यश्चापाके निहितानां द्रव्याणां विनाशमुत्पत्तिञ्च प्रतिजानीते, तस्यै-तन्नोपपद्यते। लक्षवताञ्चामीषां यथावदुपलब्धिरिति।

सूच्यग्रविभेदेऽपि वस्तुनस्तथाऽवस्थानं न पूर्वस्य सर्वात्मना विना-शोऽपरस्य चोत्पत्तिरनुपलब्धेः। खण्डस्य पटस्य खल्वेवमुत्पत्तिर्दृश्यते इति। परिमाणमप्यपगतांशस्य नश्यति न त्वपरांशस्य। आकुञ्चन-प्रसारणञ्च पटस्यैतत् प्रतिपत्तव्यम्। अथापि खल्वाधारस्य लवशो-ऽपगमात् परिमाणान्तरस्योत्पत्तिर्भवति। न जात्वपि पूर्वस्य द्रव्यस्य सर्वात्मना विनाशोद्रव्यान्तरस्य चापूर्वस्योत्पत्तिरिति। सोऽयं भूम्ना व्यपदेशः। द्रव्यान्तरोत्पत्तौ खल्वेतत् न प्रत्यभिज्ञायेत। न जातु खण्डः पटः प्रत्यभिज्ञायते। छिन्नाणां तन्तूनां त्वपगमे न खल्वपि

खण्डः पटउत्पद्यते सएव लवतिष्ठते इति। अथापि खल्ववस्थितैः संयोगैः क्वचित् खण्डपटवदस्तु खण्डद्रव्यस्योत्पत्तिः, न लवशमापाक निहितानां विनाशोऽपूर्वाणाञ्चोत्पत्तिरिति। तदेवमापाके विपक्वानां शरावोदञ्चनादीनामवस्थानं, विनाशश्च स्थाल्यामाहितानां तण्डुलादीनामधःसन्तापेनेत्यननुयोज्या वस्तुशक्तिर्यथादर्शनमभ्यनुज्ञातव्या भवति। एतेन रसादयोव्याख्याताः। प्रत्यक्षञ्च पक्वानां विदलादीनां रसान्तरमिति। पृथिव्यां रूपादयोगुणाः पाकादुत्पद्यन्ते न लियमनेक रूपादिस्वभावेति कुतएतत् प्रतिपत्तव्यम् ?

एकद्रव्यत्वात् ॥ ७ ॥

एकं खलु द्रव्यं पृथिवीत्येकमेव तस्याः स्वाभाविकं रूपं, रूपान्तरञ्च निमित्तव्यपाश्रयमिति विज्ञायते। एकैकं द्रव्यमवादिकमेकैकरूपादि मत् दृष्टं तथा चेयमिति। कृष्णं हि रूपं पृथिव्याः स्वाभाविकमिति पीत लोहितकपिशकड़ारादिरूपान्तराणां निमित्तान्तरात्तत्रोपलब्धिरिति। अपामग्निना संसृज्यमानानां न खल्वपि रूपान्तरमुत्पद्यते। सेयमचिन्त्या वस्तुशक्तिरशक्यापक्रवेति। उपजनापाययोस्तु पृथिव्यां साक्षादुपलब्धिः। क्वचित् पूर्वं रूपमपैति परञ्चोपजायते इति साक्षादुपलभ्यते पृथिव्यामिति। यत्कृष्णं तत् पृथिव्याइति चार्षाद्विज्ञानादियमित्यम्नूनेति प्रतिपत्तिः। योऽप्यनेकरूपस्वभावेयमिति प्रतिजानीते, सोऽपि न कुतश्चिद्धेतोः प्रतिजानीते इति। यदि हीयमनेकरूपस्वभावा स्यात् स्थूलायां पृथिव्यां तस्यानुपलब्धिर्नोपपद्यते। यस्मात्,

अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥८॥

अणोः कारणादनुपलब्धिर्नित्या, महतः कारणादुपलब्धिर्नित्या, न खल्वपि व्यभिचरतीत्येतत् द्वयं व्याख्यातं, महती चेयमिति। महत्यनेक द्रव्यवत्त्वादिति महत उपलब्धिवचनादणोरनुपलब्धिमुक्तां मन्यते। कुतः पुनर्महत् परिमाणमुत्पद्यते कुतश्चाणु परिमाणमित्यत आह,—

**कारणबहुत्वाच्च॥ ९॥**

महत्त्वप्रचयाभ्याञ्चेति चार्थः। सन्निकृष्टेन महता परिमाणेन संवध्यते। त्रसरेणुकारणानां द्व्यणुकानां बहुत्वात्तच्च महतः परिमाणस्योत्पत्तिः। द्वाभ्यां तन्तुभ्यामप्रचिताभ्यामारब्धस्य पटस्य महत् परिमाणं कारणमहत्त्वादुत्पद्यते। प्रचीयमानाभ्यां तूलपिण्डाभ्यामारब्धे वस्तुनि योऽयं महतः परिमाणस्योत्कर्षः स प्रचयनिमित्तः। कस्मात्? अप्रचिताभ्यामारब्धे तदनुपलब्धेः। कः पुनः प्रचयः? कैश्चित् प्रदेशैरसंयुक्तयोराभिमुख्येन किञ्चित्प्रदेशसंयोगोद्रव्योत्पत्तिहेतुरिति॥

**अतोविपरीतमणु॥ १०॥**

कारणस्याबहुत्वादणुत्वादप्रचयाच्चाणोः परिमाणस्योत्पत्तिः। द्वाभ्यामणुभ्यामारब्धे द्व्यणुके यदणुपरिमाणमुत्पद्यते, कारणस्याबहुत्वादणुत्वाच्च तदुत्पद्यते। द्वाभ्यामणुभ्यामुत्पन्नस्य द्व्यणुकस्य प्रथिमोत्पत्तावपि तदण्वेव भवति न महदिति। स्वापेक्षया बृहति परिमाणे परिमाणस्य निमित्तभावोनत्वणोरणुतरे इति। यावता प्रदेशेनाणुरवच्छिद्यते द्व्यणुकन्तु ततोऽधिकेनेति परमाण्वपेक्षया द्व्यणुकं बृहदिति। विशेषहेतुभावाभयहेतुतभावः। परमाणुद्वित्वं द्व्यणुकपरिमाणे हेतुर्न त्वणुपरिमाणमित्यत्र विशेषहेतुर्नास्ति। विशेषहेतुभावादुभयं हेतुर्भवतीति। कुवल-

यादिष्वापेक्षिकं यदणुपरिमाणं तदप्येतेभ्य एवोत्पद्यते इति। तदेवं स्थूलायां पृथिव्यां महद् परिमाणमुत्पद्यते इति सतोऽनेकस्य रूपस्य तस्यामनुपलब्धिर्नोपपद्यते इति। अथापि खल्वियं पृथिवी यथाऽऽमलकाद्यपेक्षया महती तथाऽवाद्यपेक्षयाऽणुरपीत्यणुत्वात् सतोऽप्यनेकस्य रूपस्य तस्यामनुपलब्धिरुपपद्यते। तच्च नैवं मन्तव्यम्। यत् खल्वण्वेव भवति न महत् तत्रानुपलब्धिः, नत्वेवं पृथिवी। पृथिवी द्रव्यं खलु,

## अणु महदिति तस्मिन् विशेषभावाद्विशेषाभावाच्च ॥११॥

अवाद्यपेक्षयाऽण्वपि आमलकाद्यपेक्षया महदपि भवति। कस्मात्? तस्मिन् विशेषभावात् विशेषाभावाच्च। तस्मिन् पृथिवीद्रव्ये आमलकादिकमपेक्ष्य विशेषोभवति कारणबहुत्वादिकम्। अवाद्यपेक्षया त्वेष विशेषोन भवति, विपर्ययस्तु भवति। यावन्तः खल्ववयवाभवन्त्यामलकादौ, ततोबहुतराः पृथिव्यां बहुतमास्त्वावादिष्विति। न वै खल्वेकं भवत्यणु च महच्च, विरोधात्। तत्रैवं सति महदभिमानोभ्रान्तिरिति। नानुमहतोर्विरोधः। कस्मात्?

## एककालत्वात् ॥१२॥

एकस्मिन् काले खल्वनयोरुपलब्धिरिति नानयोर्विरोधः। सहानवस्थानं हि विरोधः। एककालमुपलभ्यमानयोरेकोपलब्धिस्तात्त्विकी भ्रान्तिरन्येति विशेषहेत्वभावादयुक्तम्। तदेवमेकमेव भवत्यणु च महच्चोपलब्धिप्रामाण्यात्। तच्चैतन्न भवत्येकस्मादेवाणु च महच्च, विरोधात्। भवति त्वेकस्मादण्वपरस्मान्महदिति।

दृष्टान्ताच्च ॥ १३ ॥

दृष्टोऽन्तो दृष्टान्तः। दृश्यते खल्वेषा यज्ञदत्तसेना वक्री संग्राम लब्धवर्णा च देवदत्तसेनायाः, विपरीता विष्णुमित्रसेनातः। तमाल-वनमपेक्ष्य सुरभि पद्मवनं चन्दनवनापेक्षया विपरीतम्। वङ्गगुडो-द्राक्षा मधुरा खर्जूरादिति। एवमादिकः प्रभूतो दृष्टान्तराशिरुत्प्रेक्षि-तव्यः। तदेवं दृष्टान्ताच्च प्रतिपद्यामहे भवत्येकमेकस्मादणु महदन्य-स्मादिति ॥

अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्या-ख्यातः ॥ १४ ॥

अणोर्भावोऽणुत्वं महतोभावो महत्त्वम्। तयोरणुत्वं महत्त्वञ्च न भवति। न हि स एव भावस्तत्रैव भवति। भवति लवादिपरिमाणादणु विल्वादिपरिमाणाच्च महत् पृथिव्याः परिमाणमिति। कर्मगुणैरित्येत-द्व्याकुरुते,

कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥ १५ ॥

न वै खलु कर्माणि कर्मभिर्विशिष्यन्ते, न गुणैर्गुणाः। यथैतत्, तथा नाणुत्वमहत्त्वे अणुत्वमहत्त्वाभ्यामिति।

अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥ १६ ॥

इत्थम्भावे तृतीया। कर्मगुणाश्चाणुत्वमहत्त्वाभ्यां व्याख्याताः। कर्मसु गुणेषु च खल्वणुत्वं महत्त्वञ्च भवतीति तदुपलभ्य व्यवहरति, अणूनि कर्माणि महान्ति कर्माणि अणवो गुणा महान्तो गुणा इति। अथापि

खल्वणुत्वमहत्त्वाभ्याञ्च कर्मगुणा व्याख्याताः। सङ्ख्यापृथक्त्वपरत्वापरत्वे-श्चेति चार्थः। एकं कर्म द्वे कर्मणी त्रीणि कर्माणि, एतत्कर्मैतस्मात् कर्मणः पृथक्, पूर्वमेतत् परञ्चैतत् कर्मेति। पृथिव्यामनेकानि रूपाणि अप्सु त्वेकं, रूपात् पृथग्रसोरसात् पृथग्रूपं, पूर्वं मधुरमुत्तरमम्लमिति। एवं शेषेषु॥

**एतेन दीर्घत्वह्रस्वत्वे व्याख्याते॥ १७॥**

तालतमालशालानवलोक्य व्यवहरति, योऽयं तालः स खलु तमालाद्दीर्घाद्ध्रस्वश्च शालादिति। तावेतौ ह्रस्वदीर्घौ वर्त्तुलादिवदणु महत्प्रभेदाविति। तच्चैतत् परिमाणम्,

**अनित्येऽनित्यम्॥ १८॥**

कस्मात्? आश्रयानित्यत्वात्।

**नित्ये नित्यम्॥ १९॥**

आश्रयनित्यत्वात्। तच,

**नित्यं परिमण्डलम्॥ २०॥**

परितोमण्डलं परिमण्डलम्। तदेतन्नित्यम्। कल्पान्तरानुपपत्तेः। निमित्तकारितोहि दीर्घह्रस्वादिभावइति। अन्यदनित्यमित्यर्थात् सिद्धम्। अथापि खल्वस्ति परिमण्डलमिति कुतएतत् प्रतिपत्तव्यम्? लिङ्गादित्याह,—

**अविद्या च विद्यालिङ्गम्॥ २१॥**

अविद्या हि भवति लिङ्गं विद्यायाः। परितोमण्डलं चन्द्रार्कबिम्ब

गन्धवत्सर्षपादिकमिति येयमुपलब्धिः, सा खल्वविद्या। न ह्येतत् परि- तोमण्डलम्। मात्रया व्यतिरेकात्। सूक्ष्मया मात्रया खल्वत्र पारिमाण्डल्यस्य व्यतिरेकोनिपुणसंवेद्यः। भूयस्त्वात् दोषाद्वाभिमान- इति। तदेवमविद्यया अनुमीयते, अस्ति किञ्चित् परिमण्डलमिति। विद्यापूर्व्विका ह्यविद्या भवतीति। या चेयमाकाशादिपरिमाणेषु नित्य बुद्धिः, सा भवत्यविद्या। चिरतरावस्थानात् खल्वेषां नित्यबुद्धिः न खलु तत्त्वतोऽस्ति। तया चानुमीयते अस्ति किञ्चित् परिमाणं नित्य- मिति। तच्चैतत् परिमण्डलमणु महच्चेति यथाविषयं वेदितव्यम्। परि मण्डलस्योदाहरणम्,

## विभवान्महानाकाशस्तथाचात्मा ॥ २२ ॥

यथा च विभवादाकाशो महान् भवति व्यवहारभूमौ, तथा चात्मेति। कः पुनर्विभवः? सर्व्वमूर्त्तसंयोगः। सर्व्वत्र युगपच्छब्दोत्पत्ते- रनुमीयते, अस्त्याकाशस्य विभवइति। एतेनात्मनोविभवोव्याख्यातः। गुण प्रत्यक्षान्नित्यत्वाच्च न कल्पान्तरम्। आत्मगुणानां प्रत्यक्षान्नाय- मणुः। अप्रत्यक्षाहि तदा भवेयुः। नित्यत्वाच्च न मध्यमपरिमाणः। अनित्योहि तदा स्यात्। कृतहानमकृताभ्यागमश्च प्रसज्येत। पारिशे ष्याद्विभुरिति ॥

## तदभावादणु मनः ॥ २३ ॥

मनसस्तु विभवोन भवति। ज्ञानयौगपद्यं हि तथा स्यात्। मध्यम परिमाणेऽपि समानो दोषः। तस्मादणु मनइति ॥

गुणैर्दिग्व्याख्याता ॥ २४ ॥

प्राच्यादिवुद्धयः सर्व्वत्र भवन्तीति महती दिगिति। अथापि खल्वाकाशएव गुणभेदाद्दिगित्युक्तम्। तस्मात् साऽपि महतीति ॥

कारणे कालः ॥ २५ ॥

प्रावृषेण्यादीनां भावानां सर्व्वत्र युगपदुत्पत्तिरिति तत्तत्कारणे संश्रयमाणः कालोमहानिति। अथापि खलु प्रावृषेण्यादिभावानां कारणे आकाशएव कालइति समाख्या। तस्मात् सोऽपि महानिति ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये सप्तमस्याध्यायस्याद्य-मान्हिकम्।



अथ द्वितीयाह्निकम्।



ज्ञानवतां परीक्षेति सङ्ख्या पृथक्त्वञ्चेदानीं परीक्ष्यते,

**रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥ १ ॥**

यदेतदेकत्वं नाम सङ्ख्या, तत् खल्वर्थान्तरं रूपादिभ्यः। कस्मात्? रूपरसगन्धस्पर्शव्यतिरेकात्। व्यतिरिच्यते ह्येकत्वं रूपादिभ्यः। रूपे न खल्वपि रूपमस्ति। तत्रापि त्वेकं रूपमिति बुद्धिर्भवति। तस्मात्ततोऽर्थान्तरमिति। एवं शेषेषु। एतेन द्वित्वादयो व्याख्याताः। यथैतत्,

**तथा पृथक्त्वम् ॥ २ ॥**

रूपादिभ्योऽर्थान्तरमिति। पृथक्त्वमयोगो वैलक्षण्यमनेकता इत्यनर्थान्तरम्। अथाप्येतदुक्तम्। पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता इति। शब्दविशेषादुपलब्धिविशेषः। इदमस्मात् पृथगिदमिदं नेति योऽयमुपलब्धिविशेषः, स खलु शब्दविशेषनिमित्तो न त्वर्थभेदात्। चन्दनं सुरभि चन्दनस्य सौरभमित्यभिन्नेऽप्यर्थे शब्दविशेषादुपलब्धिविशेषो दृष्ट इति।

**एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ३ ॥**

एकस्य भाव एकत्वम्। पृथग्भावः पृथक्त्वम्। न हि स एव भावस्तस्यैव भवति। भवति त्वेकमेकत्वं द्वे एकत्वे त्रीण्येकत्वानि, एकं पृथक्त्वं द्वे

पृथक्के चौणि पृथक्कानीति। द्वित्वादयोद्विपृथक्कादयस्वेतेन व्याख्याताः। अथापि खल्वाचार्य्यप्रवृत्तिर्ज्ञापयति, एकत्वमेव तेन तेन प्रकारेणोपभुज्यमानं द्वित्वादिकमुच्यते, न तत्त्वतोऽर्थान्तरमस्तीति। महता खल्वसौ प्रयत्नेनैकत्वं परीक्ष्योपरराम। न द्वित्वादीनां परीक्षाञ्चक्रे।

## निःसंख्यत्वात् कर्मगुणानां सर्वैकत्वं न विद्यते ॥४॥

कर्माणि गुणाश्चापरिसंख्येयाइति कर्मणां गुणानाञ्च निःसङ्ख्यत्वादनुमीयते, सर्वत्रैकत्वं नास्ति, नानैव तु सर्वमिति। अस्य प्रतिषेधः,

## भ्रान्तं तत् ॥५॥

यच्चैतत् कर्मगुणानां निःसङ्ख्यत्वात् नास्त्येकत्वमिति नानात्वं भावानामिति, भ्रान्तं खलु तत्। यस्मात्,

## एकत्वाभावाद्भक्तिस्तु न विद्यते ॥६॥

भक्तिर्निष्पत्तिस्तु भावानामेवं सति न भवति। अनेकलक्षणैः खल्वेकस्य भावस्य निष्पत्तिर्भवति। एकत्वस्य त्वभावे नैतदेवं भवितुमर्हति। यदि नामानेकलक्षणैरेकभावनिष्पत्तिः, अस्ति तह्येकोभावइति सर्वत्र नैकत्वमित्येतन्नोपपद्यते। अथ नास्त्येकोभावस्ततएकस्याभावादनेकोऽपि नास्तीत्यनेकलक्षणैरेकभावनिष्पत्तिरिति नोपपद्यते इति। तच्चैतत् तन्त्रान्तरसमाचारात् प्रतिपत्तव्यम्। तन्त्रान्तरे चैतदित्यभूतमुक्तम्। सर्वं पृथग्भावलक्षणपृथक्कात्, नानेकलक्षणैरेकभावनिष्पत्तेः, लक्षणव्यवस्थानादेवाप्रतिषेधइति। संख्यैकान्तवादाश्च तन्त्रान्तरेभ्योद्रष्टव्याः।

अथापि खलु कर्मणां गुणानाञ्च निःसङ्ख्यत्वात् सर्वत्रैकत्वं नास्ति द्रव्ये त्वस्त्येकत्वमिति प्रत्यवस्थानम्। भ्रान्तं तदिति प्रतिषेधः। यदि

गुणकर्मणोर्नैकत्वं, तदा एकं रूपं एकोरस एकमुत्क्षेपणमित्येवं भक्तिर्विभागस्तु न भवितुमर्हति। भवति त्वयं विभागः। तस्मादस्ति तच्चैकत्वमिति स्थापनाहेतुरिति। द्रव्यगुणाद्योस्तत्त्वातत्त्वविभागश्चोपलब्ध्यविशेषादनुपपन्नः। यच्च मन्यते द्रव्येष्वेकत्वबुद्धिस्तत्त्वरूपा विद्या, गुणादौ त्वतत्त्वरूपाऽविद्येति। सोऽयं विभागोनोपपद्यते। कस्मात्? उपलब्ध्यविशेषात्। द्रव्येऽप्येकत्वमुपलभ्यते गुणादौ चेति तयोरेका उपलब्धिर्विद्या परा त्वविद्येति विशेषहेत्वभावान्नोपपद्यते इति। सर्वंच चेदेकत्वं, कार्य्यं कारणञ्चैकं स्यात्। कार्य्यकारणभावस्तथा सति न स्यात्। यदि नास्ति तयोरेकत्वं, सर्वञ्चैकत्वमिति नोपपद्यते इत्यतआह,—

**कार्य्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते॥ ७॥**

कार्य्यं कारणञ्चैकं न भवति। द्वयोरेकत्वाभावात्। अस्ति एकत्वं कार्य्ये अस्ति चैकत्वं कारणे, द्वयोस्त्वेकत्वं नास्तीति। अथापि कार्य्यं कारणञ्च नात्यन्तं भिद्यते, क्षीरं खल्वेतत् दधिभावेन विपरिणमते, न पयइति। तदेवं कार्य्यात्मना भेदेऽपि कारणात्मना नास्ति भेदइति। यद्वै खलु नित्यं कारणं तदेकं, कार्य्यजातस्यापि तस्मादव्यतिरेकादस्त्येकत्वं कार्य्यकारणयोरिति। सत्यमेतत्। कार्य्यकारणयोरेकत्वं न विद्यते इति यत्,

**एतदनित्ययोर्व्याख्यातम्॥ ८॥**

अनित्ययोः कार्य्यकारणयोरेतद्व्याख्यातं न नित्ये। यत् खलु कार्य्यं कारणञ्चेति द्वयमनित्यं, न तयोरेकत्वमस्ति। क्षीरस्य दध्नश्चैक-

त्वाभावात् । प्रागुत्पत्तेरव्यक्ततया क्षीरे सदपि दधि न परतोऽप्यात्मप्रहाणात् क्षीरभावमापद्यते इत्यनित्ययोः कार्य्यकारणयोरेकत्वं न विद्यते इत्युक्तम् । शरावोदञ्चनादिव्यतिरेकेणापि मृदोऽवस्थानाच्चैतदेवं प्रतिपत्तव्यम् । यच्च नित्यं कारणं, तेन त्वेकत्वं भवति कार्य्याणां परमार्थभूमौ । सर्वं खलु कार्य्यजातं परतोऽप्यात्मप्रहाणात् तस्मिन्नेकीभवति । अर्णवतरङ्गवत् । तरङ्गाः खलु वै परस्परं भिद्यन्ते समुद्रश्चैक इति कार्य्यकारणयोरेकत्वं न विद्यते । तथापि त्वेषामात्मप्रहाणात् परतः प्राक् चोत्पत्तेरर्णवात्मना भवत्यवस्थानमित्येकत्वमुच्यते । अर्णवे हि सर्वे तरङ्गा एकीभवन्तीति । सर्वञ्चैतत्कार्य्यजातं कारणस्य विपरिणामः, स त्वनेकविधइति कार्य्यं कारणञ्च नैकम् । नित्यन्तु कारणमेकमेवेत्येतदनित्ययोर्व्याख्यातमिति ।

अथापि खलु यदेतत्कार्य्यं कारणञ्चेति मन्यते, नैतत् नाना । एकमेव तु वस्तु तेन तेन कार्य्यात्मना कारणात्मना चोपलभ्यते इति कार्य्यं कारणञ्चैकमन्यत्वाभावादित्यस्य प्रतिषेधोऽयं, कार्य्यं कारणञ्चैकं न भवतीति । नानैव तु कार्य्याणि नानैव च कारणानीति । तच्चैतदनित्ययोर्व्याख्यातम् । यच्च नित्यं कारणं,तत् खल्वेकमेवेति । स्थानवतां परीक्षेति संयोगः परीक्ष्यते,

अन्यतरकर्मजउभयकर्मजः संयोगजश्च संयोगः ॥९॥

पतत्त्रिणा महीधरस्य यः संयोगः, स खल्वन्यतरस्य पतत्त्रिणः कर्मणा जन्यते । यस्त्वभिमुखं प्रसर्पतोर्मेषयोर्मल्लयोश्च संयोगः, सोऽयमुभयकर्मजन्यः । यस्माङ्गुलीतरुसंयोगात् परतः तरुशरीरसंयोगः, सोऽय-

मङ्गुलीतत्संयोगाज्जायते। यस्य हस्तस्थितेन दण्डेनामेध्यस्य संयोगात् शरीरामेध्यसंयोगोऽशुद्धिहेतुः, सोऽप्ययमिति।

अविरलोत्पत्तिरिति चेन्न स्थिरसिद्धेः स्थूलसिद्धेश्च। यश्च मन्यते, भावयोरविरलोत्पत्त्या संयोगाभिमानेन संयोगोनामार्थोऽस्तीति। तच्च नैवं मन्तव्यम्। कस्मात्? स्थिरसिद्धेः। यमहमस्राक्षं भावं तमेवैतर्हि पश्यामीति पूर्वापरकालवर्त्तिनमेकं भावं स्थिरं प्रत्यभिजानाति। तस्मात् स्थिरोभावः सिध्यति। स्थूलः खल्वपि भावः प्रत्यक्षेण सिध्यति। ततोनास्ति क्षणभङ्गोभावानां कुतस्त्वविरलोत्पत्तिरिति। अथापि खल्वेतदस्ति नास्तीति कुतएतत् प्रतिपत्तव्यम्? प्रमाणतउपलब्ध्यनुपलब्धिभ्याम्। नास्ति तर्हि क्षणभङ्गः। प्रमाणतोऽनुपलब्धेः। सहकारिमध्यमध्यासीनः खल्वयं भावोऽर्थक्रियामभिनिर्वर्त्तयति। यावच्चासौ न सहकारिमध्यमध्यास्ते, न तावदभिनिर्वर्त्तयतीति। कुर्वद्रूपत्वे च प्रमाणतोऽनुपलब्धिस्तुल्या। अनुमानञ्चैवं सति न स्यात्, व्यभिचारशङ्कायानिराकरणासम्भवात्। स्थानवानेव तर्हि विभागः परीक्षितव्यः। स परीक्ष्यते,

## एतेन विभागोव्याख्यातः ॥ १० ॥

अन्यतरकर्मजउभयकर्मजोविभागजश्चेति। पूर्ववद्विदर्शनमुत्प्रेक्षितव्यम्। असंयोगइति चेत्तत्प्रसङ्गः संयोगे, प्रत्ययानुवृत्तिप्रसङ्गश्च। यस्तु मन्यते, असंयोगोविभागोन त्वर्थान्तरमिति। तस्य तत्प्रसङ्गः संयोगे, अविभागः संयोगोन त्वर्थान्तरमिति। तत्र यथा प्रमाणाभावादेकः कल्पोन सिध्यति तथा कल्पान्तरमपीति। यस्मायमसंयोगः,

सोऽयमुत्तरकालमप्यनुवर्त्तते इत्युत्तरकालमपि विभजते इति प्रत्यय-प्रसङ्गः। तस्मादसंयोगः पृथक्त्वं विभागस्त्वर्थान्तरमिति॥

**संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः॥ ११॥**

तत्र निदर्शनम्,

**कर्मभिः कर्माणि गुणैर्गुणाः॥ १२॥**

तदेतत्कृतभाष्यं पुरस्तादिति। तावेतौ संयोगविभागौ,

**अणुत्वमहत्त्वाभ्यामिति॥ १३॥**

व्याख्यातौ। इत्यभावे तृतीया। संयोगविभागौ खल्वप्यणुत्वमहत्त्वाभ्यां विशिष्येते, अणुः संयोगोमहान् संयोगइत्युपलब्धेरिति॥

**युतसिद्ध्यभावात् कार्य्यकारणयोः संयोगविभागौ न विद्येते॥ १४॥**

यदेतत् समवायिकारणं यच्च कार्य्यं, तयोः पृथगभावेन सिद्धिर्न भवति। तस्मात् कार्य्यकारणयोः संयोगविभागौ न भवतइति। सोऽयं पदार्थयोरुपश्लेषोयुतसिद्धयोः संयोगोऽयुतसिद्धयोः समवायः। स त्ववयवानां परस्परमुपश्लेषनिबन्धनः। अथेदानीं शब्दार्थयोः संबन्धं परीक्षते। तत्र शब्दार्थयोर्न संयोगः संबन्धः। कस्मात्?

**गुणत्वात्॥ १५॥**

गुणोहि शब्दोनार्थेन संयुज्यते इति॥

गुणोऽपि विभाव्यते ॥ १६ ॥

अर्थोऽपि कश्चिद्गुणोविभाव्यते। न च गुणयोः सतोः शब्दार्थयोः संयोगोभवति। अयमन्यः संयोगाभावे हेतुः,

निष्क्रियत्वात् ॥ १७ ॥

शब्दोऽर्थश्च कश्चिन्निष्क्रियोभवति। न वै तयोरन्यतरकर्मजः संयोगोनोभयकर्मजोन खल्वपि संयोगजः। मूर्त्ते हि तस्य क्रियेति। न वै खलु शब्दोऽर्थदेशं गत्वाऽर्थं संवध्नाति नार्थःशब्ददेशमागत्य शब्दमिति। अयमपरः संबन्धाभावे हेतुः,

असति नास्तीति च प्रयोगात् ॥ १८ ॥

उत्पत्स्यमाने भविष्यतीति चार्थः। वस्तुन्यसति नास्त्येतदिति प्रयुज्यते उत्पत्स्यमाने च भविष्यतीति। यन्नास्ति तदसत्, यच्चोत्पत्स्यते तदप्यसदेव प्रयोगकाले। न चासता किञ्चित् संवध्यते। यद्वै सत्, तत् खलु सता वस्त्वन्तरेण संवध्यते इति। तस्मात्,

शब्दार्थावसंबन्धौ ॥ १९ ॥

न त्वनयोः परस्परमस्ति संवन्धः। तत्रैवं सति शब्दादर्थोपलब्धिरित्येतन्नोपपद्यते। संवद्धयोः खल्वेकस्योपलब्धावन्यस्योपलब्धिर्भवतीति॥

संयोगिनोदण्डात् समवायिनोविशेषाच्च ॥ २० ॥

शब्दार्थावसंवन्धाविति प्रकृतम्। योऽयं यज्ञदत्तादिसंयोगी दण्डादिः, यश्च कुञ्जरादिसमवायी करादिः, ताभ्यां शब्दार्थौ विशिष्येते।

विशेषाच्च भवति प्रतिपत्तिः, न शब्दार्थयोः संयोगः संबन्धो न समवाय इति । कः पुनर्विशेषः ? अप्राप्तिः । दण्डयज्ञदत्तयोः करकुञ्जरयोश्च प्राप्तिरस्ति न त्वेवं शब्दार्थयोरिति । न वै शब्दोऽर्थेन प्राप्यते न खल्वप्यर्थः शब्देनेति कुतएतत्प्रतिपत्तव्यम् । पूरणप्रदाहपाटनानुपलब्धेः । यदि शब्देनार्थः प्राप्यते शब्दान्तिके अर्थः स्यात् । तदा खलु मोदकाग्निक्षुर-शब्दानामुच्चारणे मुखस्य पूरणप्रदाहपाटनानि भवेयुः । ततश्चैतान्युप-लभ्येरन् । तदनुपलब्धेर्भवति प्रतिपत्तिः न शब्देनार्थः प्राप्यते इति । अथापि खल्वर्थेन शब्दः प्राप्येत, अर्थान्तिके शब्दोभवेत् । तत्रोच्चारणं शब्दस्य न निष्पद्यते । स्थानकरणाभ्यां हि तन्निष्पत्तिः । स्थानं कण्ठा-दि करणं प्रयत्नविशेषः । न त्वेते अर्थान्तिके भवतइत्युच्चारणं शब्दस्य न निष्पद्यते । तस्मात् शब्दार्थावसंबन्धौ इति । न वै प्राप्तिनिमित्तः शब्दादर्थप्रत्ययः । किन्तर्हि,

**सामयिकः शब्दादर्थप्रत्ययः ॥ २१ ॥**

समयनिमित्ता शब्दादर्थप्रतीतिः । कः पुनः समयः ? सङ्केतोऽभि-धानाभिधेयनियमनियोगः । अस्य शब्दस्येदमर्थजातमभिधेयमिति नियमनियोगेन शब्दव्यवहारादर्थोपलब्धिर्न त्वन्यथा । विपर्यये हि शब्दश्रवणेऽपि नार्थस्योपलब्धिर्भवति । संबन्धवादिनापि चायमवर्ज-नीयः समयलक्षणः संबन्धः प्राप्तिलक्षणस्तु वर्जनीयइति । अथ परत्वा-परत्वयोः परीक्षा,

**एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च ॥ २२ ॥**

एकादिगेकश्च कालो ययोस्ताभ्यामेकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च प्रतिपत्तव्यम्। तत्र सन्निकर्षः संयोगाल्पत्वं परिस्पन्दाल्पत्वञ्च यथाविषयं वेदितव्यं, विपर्य्ययोविप्रकर्षः। दैशिकं कालिकञ्चेति द्विविधं परत्वमपरत्वञ्च। तत्र दैशिकं परत्वमपरत्वञ्च संयोगभूयस्त्वाल्पत्वाश्रयाभ्यामेकदिक्काभ्यामुत्पद्यते। मथुरास्थस्य खल्वपरः प्रयागोऽविमुक्तमपेक्ष्य, प्रयागश्चापेक्ष्यापरमविमुक्तमिति। परिस्पन्दभूयस्त्वाल्पत्वाश्रयाभ्यामेककालाभ्यां कालिकपरत्वापरत्वयोरुत्पत्तिः। युवानं खल्वपेक्ष्य स्थविरः परोभवत्यपरश्च युवा स्थविरमपेक्ष्येति। सा चेयं परत्वापरत्वयोरुत्पत्तिर्न खल्वपि सन्निकर्षविप्रकर्षबुद्धिमपेक्ष्य भवति, उपलब्धौ त्वनयोरियमुपयुज्यते इति। यदा वै सन्निकर्षविप्रकर्षौ न बुध्येते न तदानीमपि परः परोन भवत्यपरश्चापरः। वस्तुतन्त्रा हि वस्तुस्थितिः पुरुषतन्त्रा चोपलब्धिरिति। एककालाभ्याञ्चेत् परत्वापरत्वे विभिन्नकालयोस्तर्हि कार्य्ययोः परापरव्यवहारोनोपपद्यते इत्यतआह,

**कारणपरत्वात् कारणापरत्वाच्च॥२३॥**

कारणपौर्व्वापर्य्यात् कार्य्ययोः परापरव्यवहारः। परं दधि तक्रमपेक्ष्य। कस्मात्? कारणपरत्वात्। यदेतत् दध्नः कारणं क्षीरं तत् खलु तक्रस्य कारणं दध्यपेक्ष्य पूर्व्वं भवति। एतेन दध्यपेक्षया तक्रस्यापरत्वं व्याख्यातम्। कारणानां खल्वपि द्वयोर्द्वयोः परापरव्यवहारस्तयोः परत्वापरत्वाभ्याम्। पृथिव्यपरा पराआपः, आपोऽपराः परं तेजः, तेजोऽपरं परोवायुः, वायुरपरः परमाकाशं, आकाशमपरं परं मूलकारणमिति।

अथापि खल्वेतद्भावजातं परमपरञ्च । कस्मात्? एकदिक्काभ्यामेक-कालाभ्यां सन्निकृष्टविप्रकृष्टाभ्याम् । मथुरायामवस्थितस्याविमुक्तं परं भवति प्रयागमपेक्ष्य पाटलिपुत्रञ्चापेक्ष्यापरमिति । एवमन्यच । सर्व्वदिक्कयोः सर्व्वकालयोः खल्वपि वाय्वाकाशयोः परापरव्यवहारः कारणपरत्वापरत्वाभ्यामिति । प्राप्तस्तर्हि परत्वापरत्वयोरपि परापर-व्यवहारइति, तत् प्रत्याचष्टे,

**परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ २४ ॥**

तत्र निदर्शनान्तरम्,

**कर्म्मभिः कर्म्माणि गुणैर्गुणाः ॥ २५ ॥**

इतश्च परत्वापरत्वयोः परत्वापरत्वाभावं प्रतिपद्यामहे । यतः,

**इहेदमिति यतः कार्य्यकारणयोः स समवायः ॥२६॥**

कार्य्यकारणयोरिहेदमित्युपलब्धिर्यतः संबन्धाद्भवति स खलु समवायः। न तु परत्वमपरत्वञ्च परत्वापरत्वयोः कार्य्यं न खल्वपि कारणम्। संयोगस्त्वनयोर्न संबन्धः। कस्मात्? निष्क्रियत्वात्। निदर्शनञ्चेदं कार्य्यकारणयोरिति। अयुतसिद्धयोरिति प्रतिपत्तव्यम्। तदेवं परत्वापरत्वयोर्न परत्वापरत्वे । महद्दूरमल्पं दूरमित्याद्युपलब्धेस्त्वणुत्वमहत्त्वे अत्र भवतइति। तस्य खल्वेतस्य समवायस्य,

**द्रव्यत्वगुणत्वप्रतिषेधोभावेन व्याख्यातः ॥२७॥**

नायं समवायोद्रव्यत्वं न गुणत्वम्। कया युक्त्या? भावेन। यथा भावोऽनुवृत्तेरेव हेतुत्वान्न द्रव्यत्वं न गुणत्वं तथाऽयमपीति। द्रव्यत्वं

नाम द्रव्यस्य भावः। स त्वनुवृत्तेर्हेतुर्द्रव्याणां व्यावृत्तेश्च गुणकर्मणोः द्रव्यं हि द्रव्यभावेन गुणकर्मभ्यां व्यावृत्यते इति। तदेवं द्रव्यत्वमनुवृत्तेरेव न हेतुरिति। एतेन गुणत्वं व्याख्यातम्। समवायोयदि द्रव्यत्वं गुणेषु तेन व्यवहारोन स्यात् द्रव्येष्वेव स्यात्। अथ गुणत्वं गुणेष्वेव स्यान्न द्रव्येषु। तस्मान्नायं द्रव्यत्वं न गुणत्वं, किन्त्वस्य,

**तत्त्वं भावेन ॥ २८ ॥**

तच्छब्देन सन्निकृष्टतरं गुणत्वं परामृश्यते। गुणत्वन्तु समवायस्य भाववद्व्याख्यातं भवति। अथापि खलु भवनं भावः गुणस्त्वयं भवति। द्रव्यं खल्वयमाश्रयति न त्वसौ रूपादिमान् न खल्वपि कर्म्म। सोऽयमपृथग्भावात्मा पृथक्त्वप्रतिद्वन्द्वी गुणोविभागादिवदिति। अथाप्युपश्लेषविशेषोऽयं, गुणएव भवतीति। अथापि खलु तस्य भावस्तत्त्वं भावेन व्याख्यातम्। भावो यथा स्वयमेव भवति न भावान्तरमपेक्षते, तथा समवायोपि स्वयमेव भवत्याश्रयेषु न समवायान्तरमपेक्षते इति। अथापि खल्वस्य द्रव्यत्वगुणत्वप्रतिषेधइति प्रत्यवस्थानम्, गुणत्वमिति स्थापनेति। अथापि खल्विमौ पक्षप्रतिपक्षौ परत्वापरत्वगोचराविति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये सप्तमस्याध्यायस्य
द्वितीयमाह्निकम्।

समाप्तश्चायं सप्तमोऽध्यायः।

# अथ अष्टमोऽध्यायः।

आद्यमाह्निकम्।

परीक्षिते परत्वापरत्वे ख्यानवती बुद्धिरिदानीं परीक्ष्यते। तत्र प्रत्यक्षं तावत्,—

**द्रव्येषु ज्ञानं व्याख्यातम् ॥ १ ॥**

महत्यनेकद्रव्यवत्वाद्रूपाच्चोपलब्धिरित्यनेन द्रव्येषु प्रत्यक्षं ज्ञानं व्याख्यातमिति॥

**तत्रात्मा मनश्चाप्रत्यक्षे ॥ २ ॥**

आकाशञ्चेति चार्थः। द्रव्येष्वात्मा मनश्चाकाशञ्च न प्रत्यक्षं भवतीति। यथा चेदं ज्ञानं निष्पद्यते, सोऽयम्,

**ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥ ३ ॥**

ज्ञानस्य निर्देशोयत्र कृतस्तत्रैव आत्मेन्द्रियमनोर्थसन्निकर्षाद्यन्निष्पद्यते इत्यनेन ज्ञानस्य निष्पत्तिविधिरुक्तः। विशेषस्तु तत्रोच्यते,

**गुणकर्म्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम्॥४॥**

सन्निकृष्टेषु गुणकर्म्मसु ज्ञानं निष्पद्यते नासन्निकृष्टेषु। ततोविज्ञायते द्रव्यं तत्र हेतुरिति। द्रव्याधीनोहि तेषु सन्निकर्षः। द्रव्येषु खल्वेतानि वर्त्तन्ते इति॥

**सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम्॥ ५ ॥**

सामान्यविशेषेषु न खल्वन्ये सामान्यविशेषाभवन्तीति तेषु ज्ञानं ततएव निष्पद्यते, न तत्र सामान्यविशेषान्तरापेचेति॥

**सामान्यविशेषापेक्षं द्रव्यगुणकर्म्मसु॥ ६॥**

ज्ञानं निष्पद्यते। तेषु खलु सामान्यविशेषाभवन्तीति॥

**द्रव्ये द्रव्यगुणकर्म्मापेक्षम्॥ ७॥**

ज्ञानं निष्पद्यते इति प्रकृतम्। दण्डी शुक्लश्चलइत्युदाहरणम्।

**गुणकर्म्मसु गुणकर्म्माभावाद्गुणकर्म्मापेक्षं न विद्यते॥ ८॥**

गुणेषु कर्म्मसु च गुणः कर्म्म च न भवत्यन्यत्र संख्यादिभ्यः। अतो-गुणेषु कर्म्मसु च भवद्गुणकर्म्मापेचं ज्ञानं नास्तीति॥

**समवायिनः श्वैत्यात् श्वैत्यबुद्धेश्च श्वेते बुद्धिः॥ ९॥**

श्वेते वस्तुनि येयं बुद्धिरुत्पद्यते, सा खलु श्वैत्यसमवायिनोद्रव्यस्य यत् श्वैत्यं श्वेतोनाम गुणः या च तद्बुद्धिः ताभ्यामुत्पद्यते। कस्मात्? जवाकुसुमादिषु तदनुपलब्धेः श्वैत्यमनुपलभमानस्य तदनुपलब्धेश्चेति। यच्चैतत् समवायिनोद्रव्यस्य श्वैत्यं या च तद्बुद्धिः,

**ते एते कार्य्यकारणभूते॥ १०॥**

कार्य्यस्य श्वेतबुद्धेः कारणभूतमेतत् द्वयमिति। अथापि खलु श्वैत्य-बुद्धिः श्वेतबुद्धिश्चेति ये द्वे बुद्धी ते खलु कार्य्यकारणभूते। तयोः पूर्वा बुद्धिः कारणमुत्तरा बुद्धिः कार्य्यमिति। तदेवं श्वेतबुद्धिः श्वैत्य-बुद्धिं कारणतयाऽपेचते न गोचरतयेति। अथापि यथा श्वैत्यबुद्धेः श्वेतबुद्धेश्च क्रमभावात् कार्य्यकारणभावस्तथा क्रमेण भवन्तीनां घट-पटादिबुद्धीनामपि कार्य्यकारणभावः प्रसज्यते इत्यतआह,

**द्रव्येष्वनितरेतरकारणाः ॥ ११ ॥**

याश्चमा घटपटादिबुद्धयो द्रव्येषु भवन्ति तास्वितरा बुद्धिर्नेतरस्या बुद्धेः कारणम् । यत्र त्वेकं द्रव्यमपरेण द्रव्येण विशिष्यते, तत्र श्वेतबुद्धिवत् विशेष्यद्रव्यबुद्धौ विशेषणद्रव्यबुद्धिः कारणमिति द्रव्येषु द्रव्यापेक्ष-मित्युक्तम् । यदि घटपटादिबुद्धिष्वितरा बुद्धिरितरस्यां बुद्धौ न कारणं क्रमस्तर्हि तासां नोपपद्यते इत्यतश्चाह,

**कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ १२ ॥**

अक्रमादक्रम इति चार्थः । योऽयं घटपटादिबुद्धीनां क्रमः, नासौ तासां कार्य्यकारणभावाद्भवति, किन्तु बुद्धिकारणानां सन्निकर्षाणां क्रमात् । कथं कारणक्रमः? सन्निकर्षकारणानां प्रणिधानादीनामयौग-पद्यात् क्रमभावात् । अक्रमादक्रमः खल्वपि । युगपत् प्रणिधानादिना सन्निकर्षयौगपद्ये युगपद्बुद्धयो भवन्तीति ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये अष्टमस्याध्यायस्याद्य-माह्निकम् ।



## अथ द्वितीयाह्निकम्।

बुद्ध्यपेक्षस्य नामस्योदाहरणम्,

**अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥१॥**

अयमेष त्वयैनमिति बुद्ध्यपेक्षं ज्ञानम्। कस्मात्?

**दृष्टेषु भावाददृष्टेष्वभावात् ॥ २ ॥**

ज्ञातेष्वेतानि ज्ञानानि भवन्ति अज्ञातेषु तु न भवन्तीति। अयमित्येष इति चैते प्रत्यक्षविषये ज्ञाने। त्वयेत्येनमिति चैतयोर्बुद्धिगोचरोऽविषयइति। अथापि खल्वन्ये द्रव्यगुणकर्मभ्योऽर्थास्तेषु यतो ज्ञानं निष्पद्यते तद्वक्तव्यमित्यतआह,

**अर्थइति द्रव्यगुणकर्म्मसु ॥ ३ ॥**

द्रव्यगुणकर्म्माण्येवार्थावस्तूनि न त्वेतेभ्योऽन्यदस्ति वस्तु यत्र ज्ञान निष्पत्तिविधिर्वक्तव्यइति। रूपरसगन्धस्पर्शाः पृथिव्यादिगुणास्तदर्थाइति तन्त्रान्तरोक्तं परिभाषामात्रम्। विपर्य्यये त्वेतदनर्थकं स्यादिति। अथापि खल्विन्द्रियार्थसन्निकर्षात् प्रत्यक्षनिष्पत्तिः, तत्राविशेषात् सर्वैरिन्द्रियैः सर्व्वेषां विषयाणां ग्रहणं स्यात्। यस्मात्,

**द्रव्येषु पञ्चात्मकत्वम् ॥ ४ ॥**

एकैकभूतोपादानि महाभूतानि प्रत्येकं पञ्चात्मकानि भवन्ति। अणुसंयोगस्याप्रतिषेधात्। तत्रैवं सति इन्द्रियाणां विषयग्रहणव्यवस्था

न प्राप्नोति। सर्व्वत्र सर्व्वेषां सद्भावात् सर्व्वेण सर्व्वस्य ग्रहणप्रसङ्ग इति।
अस्योत्तरम्,

भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥५॥

गन्धोपलब्धौ पृथिवी कारणम्। कस्मात्? गन्धवत्त्वात्। गन्धोनाम गुणः पृथिव्याः, स्वप्रकृतिगुणग्राहीणि चेन्द्रियाणीति। अथापि खल्वियं पृथिवी पञ्चात्मिका, तत्रैवं सति सा यथा गन्धवत्त्वात् गन्धज्ञाने प्रकृतिः एवं रसादिमत्त्वात् रसादिज्ञानेऽपि प्रकृतिः स्यात् इत्यतआह भूयस्त्वादिति। यैषा पृथिवी, भूयांसः खल्वस्यां पृथिव्यांशास्त्वल्पी-यांसस्त्वावादीनामिति भूयस्त्वाद्गन्धवती पृथिवीत्युच्यते। तत्कारिता विषयग्रहणव्यवस्थेति। घ्राणनिमित्ता गन्धोपलब्धिरिति घ्राणमिन्द्रियं पार्थिवं विज्ञायते। पृथिवी खलु गन्धस्योपलब्धौ हेतुरिति। यथैतत्,

तथाऽऽपस्तेजोवायुश्च रसरूपस्पर्शाविशेषात् ॥६॥

रसस्योपलब्धावापः प्रकृतिः, रूपस्य तेजः, स्पर्शस्य वायुः। कस्मात्? रसरूपस्पर्शाविशेषात्। यथैव पृथिव्यागन्धवत्त्वं भूयस्त्वञ्च, तथैवावादीनां रसादिमत्त्वं भूयस्त्वञ्चास्तीत्यविशेषः पृथिव्याश्वादीनामिति। तदेवमाप्यं रसनं तैजसं चक्षुर्वायवीयं त्वगिन्द्रियं प्रतिपत्तव्यम्। एवं शब्दस्योपलब्धौ आकाशं हेतुः। तदेवकर्णशष्कुलीप्रदेशस्थं श्रोत्रम्। प्रतिबन्धिकारिता च शब्दानुपलब्धिरिति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये अष्टमस्याध्यायस्य
द्वितीयमाह्निकम्।
समाप्तश्चायमष्टमोऽध्यायः।

---

# अथ नवमोऽध्यायः ।

प्रथमाह्निकम् ।

परीक्षितं भावानां प्रत्यक्षम् । अभावानां परीक्ष्यते । द्विविधोह्यभावः यत्किञ्चिन्न कदाचिद्भवति गगनारविन्दादि, किञ्चिच्च कदाचिद्भवदपि केनचिद्रूपेण कुत्रचिद्भवति, न सर्व्वदा न रूपान्तरेण न खल्वपि सर्व्वत्र । तत्राद्योऽवस्तुभूतोवस्तुभूतस्त्वन्यः । यस्त्ववस्तुभूतोऽभावः सोऽयमपदार्थः । असद्भावमात्रन्त्वस्य प्रमाणादुपलब्धव्यम् । कथमिति चेत् सदुपलब्धौ तदनुपलब्धेः । प्रमाणेन खल्वयं प्रमाता सदुपलभते । यदसत् तत् खल्वसत्त्वादेव नोपलभते । अनुपलब्धेर्नास्तीति विज्ञायते । यद्यस्त्यास्यदुपलभ्येत इति । यस्तु वस्तुभूतोभवत्यभावः स त्वर्थेषु भवन्नातिरिच्यते । आचार्य्यप्रवृत्तिर्ज्ञापयति नास्ति द्रव्यगुणकर्म्मसामान्यविशेषसमवायेभ्योऽन्योऽभावोनाम । भावप्रपञ्चाएवैते सप्तमस्त्वभाव इत्यसमीचीनम् । कस्मात् ? अभिप्रायभेदापत्तेः । तस्मादर्थेषु भवन्नभावोनातिरिच्यते । तस्योदाहरणम्,

## क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥

यदेतत्कार्य्यजातमुत्पत्तेः पश्चादुपलभ्यते तत्सर्व्वं पूर्व्वमुत्पत्तेरसत् । कस्मात् ? क्रियागुणव्यपदेशाभावात् । सतोहि क्रियया गुणेन च व्यपदेशो भवति अस्ति चलत्येकः शुक्लइत्येवमादिः । प्राक् चोत्पत्तेर्न किञ्चिदेवं क्रियया गुणेन च व्यपदिश्यते । तस्मात्तदानीमसन्नास्तीति । विपर्य्यये हि

क्रियया गुणेन च व्यपदेशः स्यात्। न वै खलु प्रागुत्पत्तेः कार्य्यात्मना क्रियागुणाभ्यां व्यपदेशोभवतीति। यद्वै खल्वेतत् प्रागुत्पत्तेरसत्, तदेतत्,

सदसत् ॥ २ ॥

पूर्व्वमुत्पत्तेः कारणात्मना सदेव कार्य्यात्मना भवत्यसदिति। यच्चैतत् प्रागुत्पत्तेः कार्य्यात्मना भवत्यसत्, तत् खलु,

असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥

यद्वै न कदाचिद्भवति तस्मादसतोगगनारविन्दादेरर्थान्तरमन्यद्विलक्षणमिति। कस्मात्? असतः क्रियागुणव्यपदेशाभावात्। गगनारविन्दादेः खल्ववस्तुनः क्रियागुणव्यपदेशोन कथञ्चिद्भवति। यच्च सदसत्, तस्य त्वस्ति कारणात्मना तद्व्यपदेशः। अस्त्यभावः पृथगेकइति चैवमादिकः क्रियागुणव्यपदेशोऽस्योत्प्रेक्षितव्यइति। अथापि खल्वसदिदानीमेतत्परतोभविष्यतीति भविष्यन्नर्थोऽसन्नुच्यते। सोऽयमुत्पत्तेः प्राक्कार्य्यात्मनाऽसन्नप्यर्थोरूपान्तरेण सन्निति विज्ञायते। अथापि खल्वन्योऽर्थोऽर्थान्तरम्। सोऽयमभावोऽन्योऽर्थोन त्वर्थेभ्योऽन्यः। कस्मात्? असतः क्रियागुणव्यपदेशाभावात्। सद्धि क्रियागुणाभ्यां व्यादिश्यते। सदितिद्रव्यगुणकर्म्मणामविशेषः। अभावोपि सन्निति तेष्वेवान्तर्भवति। सोऽयं यस्याभावः तस्मादन्योभावएव कश्चिदेवमुच्यते, न त्वपूर्व्वं किञ्चिदिति। प्रागसतोऽर्थान्तरत्ववचनात् सर्व्वेषामसतामर्थान्तरत्वं प्रतिपत्तुमर्हतीति मन्यते सूत्रकारः। यथोत्पत्तेः पूर्व्वं कार्य्यजातं कार्य्यात्मना भवत्यसत्, तथा परतोप्युत्पत्तेरात्मग्रहणात् पश्चादित्याह,

सच्चासत् ॥ ४ ॥

पूर्व्वं सदपि पश्चादसत्। भूत्वा खल्वात्मप्रहाणादूर्द्धं न भवतीति। तदेतत् कारणात्मना भवदपि कार्य्यात्मना न भवतीत्यसदुच्यते। तदेवं रूपान्तरेण सदप्यन्येन रूपेणासद्भवतीत्युक्तम्। यच्चावस्तुभूतमभावोन कदाचिद्भवति, तदभिधीयते,

**यच्चान्यदसदतस्तदसत्॥५॥**

अतोऽस्मादसतोयद्विलक्षणमसत् नास्तीत्यसत् न भवतीत्यभावो-गगनारविन्दादि, तत् खल्वसदेव न कथञ्चित्सदिति। अथापि खल्वतो-ऽसतोविलक्षणं यदसदसन्नश्वोगवात्मनेत्यगौरश्वः असन् गौरश्वात्मनेत्य नश्वोगौरित्येवमादि, तदसत्। अश्वात्मना सन्नप्यश्वोन गवात्मनाऽस्तीति। असतां प्रत्यक्षन्तु,

**असदिति भूतप्रत्यक्षाभावाद्भूतस्मृतेर्विरोधिप्रत्यक्ष-वत्॥६॥**

पूर्व्वमुत्पत्तेः परतश्चात्मप्रहाणादसदिदानीमेतदिति यत्प्रत्यक्षं तत् खलु भूतस्य विरोधिनोभावस्य प्रत्यक्षाभावाद्भूतस्मृतेश्च निष्पद्यते। उपलब्धियोग्यं विरोधिनमनुपलभमानः विरोधिनश्च स्मरन् तदिदा-नीमसदित्युपलभते। भूतं ह्यभूतस्यासतोविरोधि। न हि सदसतोः सहभावइति। विरोधिप्रत्यक्षवदिति निदर्शनम्। तस्मात् प्रतिपद्यामहे विरोधिप्रत्यक्षहेतुरसत्प्रत्यक्षनिमित्तमिति।

**तथाभावेभावप्रत्यक्षत्वाच्च॥७॥**

यथा भूतप्रत्यक्षाभावाद्भूतस्मृतेस्र्चाभावप्रत्यक्षम्। तथा अभावप्रत्यक्ष-

त्वादपि भावे प्रत्यक्षम्। उपादेयेषु वासःसु लक्षितेषु, येषु तानि लक्षणानि न पश्यति तानि अनुपादेयानि वासांस्यभावप्रत्यक्षत्वात् प्रतिपद्यते। सोऽयमभावोभावप्रतिपत्तिहेतुरिति। तच्चैतदभावप्रमेयप्रतिपादनार्थं सूत्रं, लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेरिति तन्त्रान्तरसमाचारात् प्रतिपत्तव्यम्। एवमन्योऽपि विषयोवुभुत्सितव्यइति।

अथापि खलु यस्य भावस्य यत्र न भावस्तस्य तत्राभावे, सोऽयमभावोयस्मिन् भवति तस्य भावस्य प्रत्यक्षत्वात् प्रत्यक्षं भवति अयमद्यैतदिति।

## एतेनाघटोऽगौरधर्म्मश्च व्याख्यातः॥ ८॥

भवन् पटोन घटात्मना भवतीत्यघटः पटः। भवन्नश्वोन गवात्मना भवतीत्यगौरश्वः। भवत्पापं न धर्म्मात्मना भवतीत्यधर्म्मः पापमिति। पूर्व्वयोः प्रत्यक्षमन्त्ये तूपलब्धिमात्रमिति। अथापि खलु धर्म्मादुत्पद्यमानं सुखं सुखात्मना भवदपि न धर्म्मात्मना भवतीत्यधर्म्मः सुखमिति। अथापि खल्वेतद्यभूतं द्रव्यं परतोभविष्यतीति कुतः प्रतिपत्तिः? अभूतं नाम भूतप्रतिषेधः, न ह्येतत् द्रव्यमित्यतआह,

## अभूतं नास्तीत्यनर्थान्तरम्॥ ९॥

यन्न भवति तदभूतं यन्नविद्यते तन्नास्तीत्यनयोस्तुल्योऽर्थः। प्रागुत्पत्तेः परतस्वात्मप्रहाणान्न भवति कार्य्यजातं तदात्मनेत्यभूतमिति नास्तीति चोच्यते। भवन्नश्वोगवात्मना न भवतीति गवात्मना नास्तीत्युच्यते। एवं शेषेषु वाच्यम्। यद्यभूतं नास्तीत्येकोऽर्थः, नास्ति घटोगेहे इति प्रतीतिर्नोपपद्यते, न हि घटोनाम नास्तीत्यतआह,

**नास्ति घटोगेहइति सतोघटस्य गेहसंसर्गप्रतिषेधः ॥ १० ॥**

नास्ति घटोगेहे इति सतएव घटस्य गेहसंसर्गः प्रतिषिध्यते। न त्वसावस्तीति। तदेवं प्रागुत्पत्तेः परतश्चात्मप्रहाणात् कार्य्यात्मना न भवन्ति भावाः। भवन्तश्च भावान्तरात्मना न भवन्ति। एकत्र भवतश्च भावस्यान्यत्र संसर्गोन भवतीति चतुर्विधमभावजातं वस्तुभूतम्। तत्रोत्पत्तेः पूर्व्वं परतश्चात्मप्रहाणात् स्वेन रूपेणासदपि रूपान्तरेण सदेवेति नार्थेभ्योव्यतिरिच्यते। अश्वोगवात्मना न भवतीत्यगौरश्वएव। यश्च घटस्य गेहसंसर्गप्रतिषेधः, सोऽपि विभागात्मा। संयोगोहि तयोः संसर्गस्तत्प्रतिषेधोविभागएवेति। अथापि खल्वसंयोगोनाम पृथक्त्वमेतदिति।

अथापि खल्वभावोभावप्रतिषेधमात्रमिति नातिरिच्यते। प्रतिषेधोवस्त्वन्तरमिति चेत्तत्प्रसङ्गोऽभ्यनुज्ञायाम्। योऽयं भावप्रतिषेधः स खलु वस्त्वन्तरमित्यतिरिच्यतेऽर्थेभ्यइति। एवं सति, येयं भावस्याभ्यनुज्ञा सापि वस्त्वन्तरमिति तस्याश्रप्यतिरेकप्रसङ्गः। बुद्धिरिति चेदन्यत्रानुपलब्धिप्रसङ्गः। येयं भावस्याभ्यनुज्ञा सा खलु बुद्धिर्नाम गुणइति चेत् अन्यत्रानुपलब्धिप्रसङ्गः। कस्यचिद्भावस्य क्वचिदभ्यनुज्ञा भवति सा चेद्बुद्धिर्नाम गुणः, आत्मन्यसावुपलभ्येत न भावेष्विति। अथाप्यभ्यनुज्ञा नाम बुद्धिरात्मनि भवन्ती भावेषूपलभ्यते बुद्ध्यन्तरवदिति चेत्समानम्। प्रतिषेधोनामबुद्धिरात्मनि भवन्ती भावेषूपलभ्यते इत्यभावोनातिरिच्यते भावादिति।

अथापि खलु प्रागुत्पत्तेः परतश्चात्मप्रहाणात् योऽयमभावोभावानां

स खल्वयोगोनाम पृथक्त्वं गुणः। एतेन सतोघटस्य गेहसंसर्ग-प्रतिषेधोव्याख्यातः। योऽप्ययमगौरश्वइत्येकभावात्मनाऽपरभावस्याभावः, सोऽपि वैलक्षण्यं नाम पृथक्त्वमेव। तदेवं प्रागुत्पत्तेः क्रियागुणव्यपदे-शाभावादसत्कार्य्यमिति। तच्चैतत्कारणात्मना सदेव कार्य्यात्मना-ऽसदिति। असतः क्रियागुणव्यपदेशाभावादसतोऽर्थान्तरमयोगोनाम पृथक्त्वमिति। सच कार्य्यमात्मग्रहणात् परतः कार्य्यात्मना भवत्य-सदित्ययोगएवेति। यदप्यतोऽयोगाद्विलक्षणमसत् तत् खलु वैलक्षण्यं नाम पृथक्त्वमिति। यच्चैतदयोगाख्यमसत्, तस्य विरोधिनः प्रत्यक्षा-भावात् स्मरणाच्च विरोधिप्रत्यक्षवदसदिति प्रत्यक्षमिति। यथा भाव-प्रत्यक्षाभावादभावप्रत्यक्षं तथैवाभावप्रत्यक्षत्वाद्भावे प्रत्यक्षमित्यभाव-प्रमेयं भावइति।

अथापि खल्वभावे तथैव भूतस्य विरोधिनः प्रत्यक्षाभावात् स्मर-णाच्च, यत्रायमभावोभवति तस्य भावस्य प्रत्यक्षत्वाच्च प्रत्यक्षमिति। भवत्यस्मिन्नभावइति भावोऽधिकरणमभावस्य। कस्य पुनरभावस्यैवं प्रत्यक्षं, तदुच्यते। यदेतद्भावप्रत्यक्षादभावप्रत्यक्षम्। एतेनाघटोऽगौरि-त्येवमादिरभावः प्रत्यक्षतया व्याख्यातइति। तदेवं विरोधिनः प्रत्यक्षा-भावात् स्मरणाच्च प्रत्यक्षमयोगाख्यस्याभावस्य। वैलक्षण्याख्यस्य त्वधि-करणप्रत्यक्षादिति।

परीक्षितं लौकिकं प्रत्यक्षम्। अलौकिकमिदानीं परीक्ष्यते। तत्र लोकसामान्यमतीतमलौकिकम्। किञ्च प्रत्यक्षं लोकसामान्यमती-तम्? यत् खल्वार्षं विज्ञानं योगसमाधिजाद्धर्म्मादुत्पद्यते। तच्च यदा-श्रया शास्त्रप्रवृत्तिर्यस्य तत्त्वज्ञानेनापवर्गः यदाश्रयश्चैहिकामुष्मिको-

व्यवहारकलापः, सोऽयमात्मा न प्रत्यक्षोलोके। अतआत्मनि तावदार्षं विज्ञानमाह,

आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ॥ ११ ॥

योऽयमात्ममनसोः संयोगविशेषोयोगसमाधिकारितस्मादात्मन्यात्मप्रत्यक्षं भवत्यलौकिकम्। एतच्चात्मनः प्रत्यक्षं न करणव्यपाश्रयम्, आत्मनि ह्यसौ भवतीति। तच्चैतत्, तदा द्रष्टुः स्वरूपेऽवस्थानं, स्वार्थसंयमात् पुरुषज्ञानमिति तन्त्रान्तरसमाचारात् प्रतिपत्तव्यम्। अथाप्येतदुक्तम्। न च पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषोदृश्यते, पुरुषएव प्रत्ययं स्वात्मावलम्बनं पश्यतीति। विज्ञातारमरे केन विजानीयादिति चार्षं विज्ञानं करणमव्यपेक्षमात्मनः प्रत्यक्षमाचिपति। यच्च मनसैवानुद्रष्टव्यमिति, तत् खल्वात्ममनसोर्योगस्य प्रथमं येयमपेक्षा तद्विषयम्। अथाप्येतदुक्तम्। मनसातु प्रसन्नेनेत्यादि। प्रसादश्च मनसः संस्कारोयोगसमाधिनिमित्तइति। यन्मनसा न मनुते इति चार्षं विज्ञानमुत्प्रेक्षितव्यम्। अध्यात्मयोगाधिगमेन देवं मत्वाधीरोहर्षशोकौ जहातीत्यादयोनिगमाअपि बुभुत्सितव्याइति। यथैतदात्मनः प्रत्यक्षम्,

तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥ १२ ॥

योगसमाधिजाद्धर्मादुत्पद्यते। द्विविधाः खलु योगिनोभवन्ति सम्प्रज्ञातसमाधयोऽसम्प्रज्ञातसमाधयश्च। तत्रैके धारणाप्रत्याहारमव्यपेक्षसमाधयोऽसमाहितान्तःकरणाः, अपरे चोपसंहृतसमाधयोयेषां नि-

वीजः समाधिः । सहि समाध्युपसंहारइति । तत्र केषामेतत् प्रत्यक्षं ? उभयेषामित्याह,

असमाहितान्तःकरणाउपसंहृतसमाधयस्तेषाञ्च ॥ १३ ॥

ये खल्वसमाहितान्तःकरणाः ये चोपसंहृतसमाधयस्तेषामुभयेषामप्येतत् प्रत्यक्षमिति ॥

तत्समवायात् कर्मगुणेषु ॥ १४ ॥

द्रव्यसमवायात् कर्मगुणेषूभयेषां प्रत्यक्षमुत्पद्यते योगसमाधिजाद्धर्मादिति ॥

आत्मसमवायादात्मगुणेषु ॥ १५ ॥

प्रत्यक्षमुत्पद्यते योगसमाधिजाद्धर्मादिति प्रकृतम् । तदेवमलौकिके प्रत्यक्षे न लौकिकहेतूनामस्त्यपेक्षेति । आचार्यप्रवृत्तिर्ज्ञापयति, नास्त्यन्यः पदार्थोद्रव्यगुणकर्मभ्यइति । तथा सामान्यलक्षणाज्ञानलक्षणे च सन्निकर्षाविति । कस्मात्? अवचनात् । यद्यभविष्यदिदमिवावक्ष्यत्, अवचनान्नास्तीति । न वै खलु भोः कश्चित् प्रत्येति, अतीतानागतं प्रदेशान्तरस्थञ्च द्रव्यमुपलभे इति । दृष्टसामान्यात्तु भवत्युपलब्धिस्तत्समानस्य वस्त्वन्तरस्य । न त्वेतत् प्रत्यक्षमिति ।

यश्च प्रतिजानीते, यदि सामान्यलक्षणा नास्ति धूमे वह्निव्यभिचारसंशयोन स्यात् प्रसिद्धधूमे वह्निसंबन्धावगमाद्धूमान्तरस्य चानवगतेरिति । तस्याप्येतदवक्तव्यम् । यस्यायं वह्निसंबन्धोऽवगम्यते, तस्य व्यभिचारसंशयः सामान्यधर्मदर्शनादुत्पद्यते । कस्यचिद्धि संबन्धोव्य-

भिचारी विपरीतः कश्चित्, संबन्धश्चायं न च विशेषदर्शनमस्तीति। सकलवह्निधूमोपस्थितावपि तत्संबन्धस्यावगतौ न हेतुरस्ति। न चागृह्यमाणे धर्मिणि संशय उपपद्यते इति। अवगतौ वा दृष्टसमानयोगक्षेमोऽनियतसंबन्ध एवावगम्येतेति न संशयः स्यादिति। शाब्दलक्षणाऽप्येतेन व्याख्याता। सुरभि चन्दनमिति विद्यमानस्य क्रमस्याग्रहणाद्यौगपद्याभिमान इति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये नवमस्याध्यायस्याद्यमाह्निकम्॥

---

## अथ द्वितीयमाह्निकम्।

परीक्षितं प्रत्यक्षम्। लैङ्गिकमिदानीं परीक्ष्यते,

**अस्येदं कार्य्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम्॥ १॥**

एकार्थसमवायि चेति चार्थः। अथाप्येकार्थसमवाय्यपि समवाय्येव भवतीति तेनैव तस्य ग्रहणम्। कार्य्येण कारणस्य कारणेन कार्य्यस्य संयोगिना संयोगिनः विरोधिना विरोधिनः समवायिना समवायिन एकार्थसमवायिना चैकार्थसमवायिनोभवत्यनुमानमिति। कार्य्येण कारणमनुमीयते पूर्व्वोदकविपरीतमुदकं नद्याः पश्यन्ननुमिनोति भूता वृष्टिरिति। कारणेन कार्य्यमनुमीयते मेघोन्नतिविशेषं पश्यन्ननुमिनोति भविष्यति वृष्टिरिति। अन्यदुदाहृतं पुरस्तादिति। तदेतल्लैङ्गिकम्। लिङ्गात् खल्वेतदुत्पद्यते। किं पुनर्लिङ्गम्? येन लिङ्ग्यते ज्ञायते तल्लिङ्गम्। कार्य्यमुपलभ्यकारणमनुमिनोति कारणञ्चोपलभ्य कार्य्यमिति। एवं शेषेषु।

**अस्येदं कार्य्यकारणसंबन्धश्चावयवाद्भवति॥ २॥**

यदस्येदमिति लैङ्गिकं यच्च कार्य्यकारणसंबन्धस्तत् द्वयमवयवाद्भवात। कः पुनरवयवः? यस्तन्त्रान्तरेऽनुशिष्यते, प्रतिज्ञाहेतूदाहरणोपनय निगमनान्यवयवाः। साध्यनिर्देशः प्रतिज्ञा। उदाहरणसाधर्म्यात् साध्य-

साधनं हेतुः। तथा वैधर्म्यात्। साध्यसाधर्म्यात् तद्धर्म्मभावी दृष्टान्त-उदाहरणम्। तद्विपर्य्ययाद्वा विपरीतम्। उदाहरणापेक्षस्तथेत्युपसंहारेण नचेति वा साध्यस्योपनयः। हेत्वपदेशात् प्रतिज्ञायाः पुनर्व्वचनं निगमनम्। तदिमे तन्त्रान्तरानुशिष्टाश्चवयवाः। निदर्शनम्। पृथिव्यादिकं कारणवदिति प्रतिज्ञा। उत्पत्तिधर्म्मकत्वादिति हेतुः। उत्पत्तिधर्म्मकं स्थाल्यादि द्रव्यं कारणवत् दृष्टमित्युदाहरणम्। तथा-चोत्पत्तिधर्म्मकं पृथिव्यादिकमित्युपनयः। तस्मादुत्पत्तिधर्म्मकत्वात् कारणवत् पृथिव्यादिकमिति निगमनम्। वैधर्म्योक्ते च हेतौ। पृथिव्यादिकं कारणवत्। उत्पत्तिधर्म्मकत्वात्। अनुत्पत्तिधर्म्मकमात्मद्रव्यम-कारणवत् दृष्टम्। न च तथा अनुत्पत्तिधर्म्मकं पृथिव्यादिकम्। तस्मादुत्पत्तिधर्म्मकत्वात् पृथिव्यादिकं कारणवदिति।

कार्य्यकारणसंबन्धः खल्वपि। शरावोदञ्चनादिकं मृत्कारणकम्। तदनुविधानात्। वह्न्यनुविधायी पाकोवह्निकारणकोदृष्टः। तथाच मृदमनुविधत्ते शरावोदञ्चनादिकम्। तस्मात्तदनुविधानान्मृत्कारणक-मिति। अथापि खलु कार्य्यं कारणेन संबध्यते। तदुत्पत्तिकत्वात्। सुवर्णोत्पत्तिकं कुण्डलादि सुवर्णेन संबध्यमानं दृष्टम्। तथाच कारणोत्पत्तिकं कार्य्यम्। तस्मात् कारणोत्पत्तिकत्वात् कारणेन संबध्यते कार्य्यमिति। एवं वैधर्म्योक्तेऽपि वाच्यम्। सोऽयमस्येदमित्यनुमाने-ऽन्तर्भूतः कार्य्यकारणसंबन्धोवैजात्यात् पृथगभिधत्ते भगवान् सूत्रकारः। सुखेन खल्वेतत् शिष्याः प्रतिपद्येरन्निति।

अथापि खलु कार्य्यकारणसंबन्धोऽवयवाद्भवति। अवयवनमवयवः। सोऽयमन्वयोव्यतिरेकसहकृतस्तच्च हेतुरिति। अथापि खल्ववयवे कारणे

कार्य्येण संबन्धः समवायेन लन्यच । कपाले हि घटः समवैति न कुला-लादौ इति । तदेतदनुमानमनेकशाखं बहुपरिकरं तन्त्रान्तरसमाचारात् प्रतिपत्तव्यमिति ॥

## एतेन शाब्दं व्याख्यातम् ॥ ३ ॥

प्रत्यक्षलैङ्गिकव्याख्यानेन शाब्दं व्याख्यातमिति । यद्धि प्रत्यक्षेणोप-लभते लिङ्गाद्वानुमिनोति परानेतद्बोधयितुं भूतदयया शब्दं प्रयुङ्क्ते । शब्दाच्च योऽर्थः प्रतीयते सोऽयं प्रत्यक्षानुमानाभ्यामवगतइति शब्दात् प्रतीयमानेऽर्थे प्रत्यक्षमनुमानं वा प्रमाणं न शब्दः । योऽप्यलौकिको-ऽर्थस्तत्राप्यार्षं विज्ञानं हेतुरिति ।

अथापि शाब्दं विज्ञानं न शब्दस्य प्रमाणभावमपेक्षते इति कुतएतत् प्रतिपत्तव्यम्? विप्रलम्भकवाक्यादर्थोपलब्धेः । विप्रलम्भकवाक्यमेतदिति जानानोऽप्यर्थमुपलभते । उत्तरकालं यदि तत्र प्रमाणं किञ्चिदुप-लभते, तथ्यमेतदिति प्रतिपद्यते । विपर्य्यये विरोधे च विपर्य्ययइति । विमर्शविपर्य्ययोपपत्तेश्च । शब्दादर्थमुपलभमानस्य, यदसौ ब्रवीति तत्प्र-माणादुपलब्धं न वेति विमर्शः, यदयमाह मिथ्यैतदिति विपर्य्ययश्चोप-पद्यते । विमर्शविपर्य्ययोपपत्तेः प्रतिपद्यामहे, न शब्दस्य प्रमाणभावा-पेक्षा शब्दादर्थोपलब्धिरिति । तदेवमाप्तोपदेशेन प्रमाणम्, अथाप्तो-पदेशः प्रमाणं, नैव तत्र विमर्शविपर्य्ययावुपपद्येते । अनाप्तवाक्याच्चार्थो-पलब्धिः । प्रत्यक्षश्चैतन्न शक्यमपह्नोतुमिति ।

अथापि खल्वयं जिज्ञासितमर्थमाप्तोपदेशात् श्रुतमनुमानेन जिज्ञा-सते अनुमानेन ज्ञातञ्च प्रत्यक्षतोदिदृक्षते इति प्रत्यात्मं व्यवस्थितो-

नियमः। स खल्वयमाप्तोपदेशं न प्रत्येति, अतोऽनुमानेन जिज्ञासते। तदपि परोक्षमिति प्रत्यक्षतोदिदृक्षते इति। यदि शब्दः प्रमाणं तत्रायमप्रत्ययोनोपपद्यते निर्दोषप्रमाणभावादिति। न हि लिङ्गादुपलब्धौ विमर्शविपर्य्ययाप्रत्ययाः प्रक्रमन्ते। संवादार्थमिति चेत् लिङ्गादुपलब्धौ तत्प्रसङ्गः। अथाप्ययमाप्तोदेशं प्रत्येति संवादार्थन्त्वनुमानेन जिज्ञासते इति चेत्, लिङ्गादुपलब्धावपि शब्देन जिज्ञासाप्रसङ्गः विशेषोवा वक्तव्यइति। श्रोतव्योमन्तव्यइति च श्रुतस्य मननमृषिरभिधत्ते। अथाप्येतदुक्तम्। आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसन्धानादिति।

योऽपि प्रतिजानीते, आप्तेन दृष्टोऽनुमितोवाऽर्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमइति। सोऽप्येवं वाच्यः। यथार्थोपलब्धिसाधनं च प्रमाणं मन्यते। अयथार्था चोपलब्धिः खल्वपि शब्दादुत्पद्यते। तस्मात् संशयविपर्य्ययसाधनवन्नासौ प्रमाणम्। प्रमाणादुपलब्धोह्यर्थस्तथाभूतोभवतीति। प्रत्यक्षलैङ्गिकयोरपि यदयथार्थोपलब्धिसाधनं न तत् प्रमाणं, यच्च प्रमाणं न तदयथार्थोपलब्धिसाधनम्। सोऽयं प्रमातुरपराधोन प्रमाणस्य। निमित्तान्तरकारितश्च प्रत्यक्षलैङ्गिकयोरुपप्लवः, न त्वेतत् शब्दे सम्भवति। रूपान्तराभावात्। यदेवास्यरूपं यथार्थोपब्धिसाधनस्य तदेव विपरीतस्यापीति। तस्मादुपलब्धिसाधनमात्रं न प्रमाणम्। अथोपलब्धिसाधनमात्रं प्रमाणं, आप्तोपदेशः प्रमाणमित्येतन्नोपपद्यते। न ह्यनाप्तोपदेशेनोपलब्धिं साधयतीति। संज्ञादीनाञ्च प्रमाणान्तरभावप्रसङ्गः। यदि यदुपलब्धिसाधनं तत्प्रमाणं, संज्ञादीनामपि प्रमाणान्तरभावः प्रसज्यते। संज्ञादयोऽपि साधयन्त्युपलब्धिमिति। तस्मात्

लिप्यादिवत् शब्दोऽपि न प्रमाणान्तरमिति। प्रमाणान्तरोपलब्धार्थ-प्रज्ञापनमिति चेत्, समानम् । अथापि प्रमाणावगतार्थप्रज्ञापनमात्रं प्रयोजनं संज्ञादीनामिति नैतेषां प्रमाणान्तरभावइति चेत्, शब्दस्यापि तदेव प्रयोजनमिति शब्दोऽपि न प्रमाणान्तरमिति । स्वयं हि ज्ञातमर्थं परान् प्रतिपादयितुकामेन शब्दः प्रयुज्यते इति। अथापि खल्वेवमसौ-पुरुषोवेदइति शब्दात् प्रतिपद्यतेन त्वेवमसावर्थइति। तत्र प्रयोक्तुर्विज्ञानं तेनानुमीयते इत्यनुमितौ हेतुः शब्दः । तच्च विज्ञानं यदि प्रामाणिकं तदा संवादः व्यवहारश्च ततः प्रवर्त्तते, विपर्य्यये विपर्य्ययइति । आप्ताः खल्वधिगतमेव तत्त्वतोऽर्थमुपदिशन्तीत्याप्तोपदेशस्य प्रामाण्याभिमान-इति । अपूर्व्वा ह्युपलब्धिः प्रत्यक्षानुमानाभ्यामुत्पद्यते, न त्वेवं शब्दात् । नियमतोह्युपलब्धेऽर्थे तस्य व्यापारइति । एतेनैतिह्यं व्याख्यातम् । इति होचुरित्यैतिह्यं अनिर्दिष्टप्रवक्तृकं प्रवादमात्रमिति ।

अथाप्येतल्लैङ्गिकं संयोग्यादिकात् लिङ्गादुत्पद्यते चेत्, संयोग्यादिक मर्थान्तरमर्थान्तरस्यापदेशइत्येतन्नोपपद्यते । लिङ्गं खल्वेतत् स्यात्। अथापदेशोऽयं, तन्निमित्तं विज्ञानं लैङ्गिकमिति नोपपद्यते, आपदेशिकं हि तदेतत् स्यात्। उपपद्यते इत्याह । कथम् ? यस्मात्,

**हेतुरपदेशोलिङ्गं प्रमाणं करणमित्यनर्थान्तरम्॥४॥**

हीयते गम्यतेऽनेनेति हेतुः । सोऽयमपदेशः, तेन ह्यपदिश्यते इति । तदेव लिङ्गं, लिङ्ग्यते ज्ञायतेऽनेनेति। तच्च प्रमाणं, प्रमीयतेऽनेनेति। तदेव करणं, साधकतमं भवत्यनुमिताविति । सेयं सामान्याभिधायिनः शब्दाद्विशेषप्रतिपत्तिरिति । तदेतत् सर्व्वमनर्थान्तरं न त्वेषामर्थ-भेदइति । कस्मात् ?

**अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥ ५ ॥**

अस्येदं कार्य्यं कारणमित्यादिवत् अस्य ज्ञापकस्येदं ज्ञाप्यमस्यापदेशस्येदमपदेश्यमस्य लिङ्गस्येदं लिङ्ग्यमस्य प्रमाणस्येदं प्रमेयमस्य करणस्येदं कार्य्यमिति बुद्धिः सर्व्वत्रापेक्षते। द्वयोः संबन्धदर्शनं सर्व्वत्रापेक्षितमिति शब्दान्तरमात्रं न त्वर्थान्तरमिति।

अथापि खल्वस्येदमिति बुद्ध्यपेक्षितत्वादुपमानादयोन प्रमाणान्तरमिति। तत्रोपमानं सादृश्यप्रतिपत्तिहेतुर्न प्रमाणान्तरम्। यदा द्वौ भात्रौ पश्यति सादृश्यमनयोः प्रत्यक्षमुपलभते। प्रमाणान्तरभावे वा साधर्म्यप्रतिपत्तिहेतुवत् वैधर्म्यप्रतिपत्तिहेतोस्तत्त्वप्रसङ्गः। यत्र गोसदृशोगवयइत्यारण्यकात् श्रुतवतोऽरण्यं गतस्य गवयं पश्यतस्तत्र गोसादृश्यज्ञानं तदपि प्रत्यक्षम्। तस्यैव परतोगवि गवयसादृश्यप्रतिपत्तिः प्रत्यक्षमनुमानं वा। यत्र तत्र गवयपदसङ्केतग्रहणं तदप्यनुमानम्। गोसादृश्यमुपलभ्य खलु तत्र गवयशब्दस्य सङ्केतमनुमिनोति। तत्र गवयशब्दप्रयोगोहि सङ्केतनिमित्तइति। एवमर्थापत्तिरप्यनुमानम्। अर्थादापत्तिः प्रसङ्गः। दिवाऽभुञ्जानस्य भोजनकार्य्यं पीनत्वमुपलभ्य रात्रिभोजनमनुमिनोति। जीवतोदेशसंयोगाव्यभिचाराद्गृहेऽनवस्थितस्य वहिरवस्थानमनुमीयते। सम्भवोनाम समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणम्। तच्चानुमानम्। द्रोणस्य सत्ताग्रहणात् यदाढ़कस्य सत्ता गृह्यते, तत् खलु द्रोणं प्रत्याढ़कस्य समुदायिभावात्। चतुर्गुणितोह्याढ़कोद्रोणइति। अभावोविरोधी, अभूतं भूतस्य भूतमभूतस्य भूतोभूतस्य। तदनुमानमित्युक्तम्। तदेवं परीक्षितं लैङ्गिकम्। अथेदानीं स्मृतिः परीक्ष्यते। सा चेयम्,

**आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ॥६॥**

उत्पद्यते। आत्ममनसोर्यः संयोगविशेषस्तस्मात् संस्काराच्च प्राचीनादिति। कोऽसौ विशेषः? निमित्तविशेषव्यपाश्रयइति। तच्चैतत्, प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसंबन्धानन्तर्य्यवियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्म्माधर्म्मनिमित्तेभ्यइति तन्त्रान्तरसमाचारात् प्रतिपत्तव्यमिति। यथा खल्वात्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः,

**तथा स्वप्नः ॥ ७ ॥**

तथैवात्ममनसोः संयोगविशेषात् संस्काराच्च स्वप्नोनाम विज्ञानमुत्पद्यते। कः पुनरत्र विशेषः? आगन्तुकनिद्रादोषइत्याह। वातपित्तश्लेष्मणां दोषात् खल्वपि स्वप्नोभवति। वातदोषात् खल्वयं सुप्तआकाशे विचरति वसुन्धरां पर्य्यटति व्याघ्रादिभ्योवा बिभेति। पित्तदोषात् प्रविशत्यग्निं आलिङ्गति ज्वालां काञ्चनपर्व्वतविद्युत्स्फुरणादिकञ्चोपलभते। श्लेष्मदोषात् सन्तरति सरिदर्णवं पश्यति धारासम्पातं शिलोच्चयञ्च राजतमिति। एवं शेषेषु वाच्यम्। संस्कारः खल्वप्यत्र हेतुर्न ह्यन्धः स्वप्नेषु किञ्चित् पश्यतीति।

सोऽयं स्वप्नोन स्मृतिः। कस्मात्? पृथगुपदेशात्। जाग्रत् खल्वयं पुरुषोयत् किञ्चन पश्यति शृणोति जिघ्रति स्पृशति रसयति वा, तत्कारितसंस्कारवशान्मनसि करणविलये सत्यात्ममनःसंयोगविशेषादन्तर्नाड़ीषु निद्रादोषोपनीतं तथाविधमेव प्रतीतिशरीरं विषयं पश्यति शृणोति जिघ्रति स्पृशति रसयति चेति। सुप्तोऽहमद्य रथमपूर्व्वमद्राक्षं

शब्दांश्च मनोरमानशृणवं अस्प्राक्षञ्च मन्दं समीरणं दिव्यानजिघ्रञ्च सुमनसोगन्धानभ्यवाहरञ्च स्वादूनि भोजनानीत्येवं व्युत्थितः परामृशति इति। यथा खलु स्वप्नः, तथा,

स्वप्नान्तिकम्॥ ८॥

स्वप्नस्यान्तिकं स्वप्नान्तिकम्। तदेतत् सौषुप्तं विज्ञानम्। जागरितस्थानः स्वप्नस्थानः सुषुप्तस्थानोहि पुरुषोभवतीति। तत्रात्मनि मनसोलयात् योऽयमात्ममनसोः संयोगविशेषस्तस्मादेतदुत्पद्यते। सुखं खल्विदानीं पुरुषोऽनुभवति। सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति व्युत्थितः परामृशति। सोऽयं सुषुप्तिनिमित्तं संस्कारविशेषेण स्मृतिस्वप्नहेतुरिति। तच्चैतत् स्वप्नान्तिकं नैतावतोनिमित्तादुत्पद्यते, किन्तु,

धर्म्माच्च॥ ९॥

धर्म्मोऽपि तत्र हेतुः। तदानीं खल्वयमात्मा परेणात्मना सम्पद्य स्वेन रूपेणाभिसम्पद्यतेइति। स्वप्नः खल्वपि धर्म्मादधर्म्माच्चोत्पद्यते। तत्र धर्म्माद्गजारोहणादिकमधर्म्मादन्धकूपपतनादिकमात्मनः पश्यतीति। अथापि खल्वविद्या च विद्या चेति द्विविधा बुद्धिः, तयोः खलु,

इन्द्रियदोषात् संस्कारदोषाच्चाविद्या॥ १०॥

इन्द्रियदोषादन्यथा भूतमन्यथोपलभते। संस्कारदोषादन्यथाभूतमन्यथा स्मरति। यच्चान्यथा भूतस्यान्यथाऽनुमानं तदपीन्द्रियदोषादिति। सेयमविद्या। अथापि खल्विन्द्रियस्य मनसोरजस्तमोऽतिशयनिमित्ताद्दोषात् संस्कारदोषाच्च मिथ्याज्ञानप्रभवाद्भवत्यविद्या अतस्मिंस्तद्बुद्धिर-

नात्मन्यात्मबुद्धिरभये भयबुद्धिरसुखे सुखबुद्धिरत्राणे त्राणबुद्धिरित्यादि यथाविषयं वेदितव्यम्। सेयं कार्य्यभूता भवत्यविद्येति॥

तद्दुष्टज्ञानम्॥ ११॥

सेयमविद्या दुष्टज्ञानमिति॥

अदुष्टं विद्या॥ १२॥

यत्पुनरदुष्टं ज्ञानं दुष्टज्ञानं विरुणद्धि सेयं विद्या। विद्या खल्वविद्याविपर्य्ययेण वेदितव्येति॥

आर्षं सिद्धदर्शनञ्च धर्म्मेभ्यः॥ १३॥

आम्नायविधातॄणामृषीणामतीतानागतवर्त्तमानेष्वतीन्द्रियेष्वर्थेषु धर्म्मादिषु च योगसमाधिनिमित्तं यदार्षं विज्ञानं प्रातिभं नामोत्पद्यते, यच्चाञ्जनादिसिद्धानामतीन्द्रियेष्वर्थेषु ज्ञानमुत्पद्यते, तदेतत् धर्म्मेभ्य उत्पद्यते इति। अथापि खल्वार्षं यत्समाधिसिद्धानां दर्शनमविद्योपमर्द्दकमुत्पद्यते, धर्म्मेभ्यस्तदुपद्यते इति। तच्चैतत् योगाङ्गानुष्ठानाद् शुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेरिति तन्त्रान्तरसमाचारात् प्रतिपत्तव्यमिति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये नवमस्याध्यायस्य

द्वितीयमाह्निकम्॥

समाप्तश्चायं नवमोऽध्यायः॥

---

# अथ दशमोऽध्यायः।

आद्यमाह्निकम्।

परीक्षिता बुद्धिः सुखदुःखयोरिदानीं परीक्षाक्रमः। तत्र, दुःखविकल्पे सुखाभिमानाच्चेति तन्त्रान्तरसमाचारात् सुखदुःखयोर्मिथोऽर्थान्तरभावो न प्राप्नोतीत्यतआह,

**इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखःदुःखयोरर्थान्तरभावः ॥ १ ॥**

इष्टकारणकं सुखमनिष्टकारणकं दुःखं न चैते सह भवतइत्यनयोः परस्परमर्थान्तरभावः। स्रगाद्यभिप्रेतविषयनिमित्तमनुग्रहलक्षणं सुखं विपरीतं दुःखमिति। कार्य्यं मुखप्रसादादि सुखस्य विपरीतं दुःखस्येति। तन्त्रान्तरसमाचारस्तु विषयप्रभवं दुःखानुषक्तं सुखं दुःखमिति भावयतोवैराग्यं स्यादिति। यस्तु ज्ञानविशेषभावमनयोः प्रतिजानीते, तस्यैतत्,

**संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥**

उपलब्धिभेदश्चेति चार्थः। सुखं दुःखञ्च न संशयस्यान्तरे भवति न निर्णयस्य। सोऽयमनयोर्ज्ञानादन्यत्वे हेतुः। कस्मात्? कल्यान्तरानुपपत्तेः। उपलब्धिभेदः खल्वपि। सुख्यहं दुःख्यहमित्युपलब्धिः सुखदुःखयोर्जानामीत्यादिका च ज्ञानस्येति। उपलब्धिभेदाच्चार्थभेदइति। अनो-

कहमुपलभे महीरुहमुपलभे इति संज्ञाभेदमात्रं न त्वर्थभेदइति। इतश्च प्रतिपद्यामहे सुखदुःखे न ज्ञानप्रभेदाविति । यतः,

**तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥ ३ ॥**

संशयोर्निर्णयस्य प्रत्यक्षानुमानाभ्यां निष्पद्यते । न त्वेवं सुखं न दुःखं, विषयोपयोगादिकं हि तत्र हेतुरिति । प्रत्यक्षात् तावत् स्थाणुपुरुषयोः समानं धर्म्ममारोहपरिणाहौ पश्यन् संशेते किमयं स्थाणुराहोस्वित् पुरुषइति । विशेषञ्चोपलभमानोनिर्णयति स्थाणुरयं पुरुषोऽयमिति । अनुमानात् खल्वपि । गर्ज्जितान्मेघमनुमाय संशेते वृष्टिर्भविष्यति आहो-स्विन्नेति । मेघोन्नतिविशेषञ्चानुमाय निर्णयति भविष्यति वृष्टिरिति । अथापि खल्वेते सुखदुःखे प्रत्यक्षानुमानाभ्यां निष्पद्येते । अभिप्रेतं हि विषयं प्रत्यक्षमुपलभमानस्यानुमिमानस्य च सुखं निष्पद्यते। विपर्य्ययेण दुःखमिति । यदि ज्ञानप्रभेदावेते प्रत्यक्षलैङ्गिकाभ्यामनयोर्निष्पत्तिर्नोप पद्यते । न हि ततएव तयोर्निष्पत्तिरिति ॥

**अभूदित्यपि ॥ ४ ॥**

भविष्यतीत्यप्यर्थः । पूर्व्वोदकविपरीतमुदकं नद्याः पश्यन्ननुमिनोति वृष्टिरभूदिति । मेघोन्नतिविशेषेणानुमीयते भविष्यति वृष्टिरिति ॥

**सति च ॥ ५ ॥**

वर्त्तमाने च विषये ज्ञानमुत्पद्यते । तदेवं त्रैकाल्यविषयं ज्ञानं न त्वेवं सुखदुःखे इति । अथापि खल्वर्थाकारनिर्भासं ज्ञानं न त्वेवं सुखदुःखे इति । एतेन स्वात्यन्यत्वं व्याख्यातम् ॥

**कार्य्यादर्शनात् ॥ ६ ॥**

विषयेन्द्रिय सन्निकर्षे अस्येदमिति बोधे सत्यपि कार्य्यं सुखं दुःखञ्च न दृश्यते। ज्ञानप्रभेदौ चेदेते, दृश्येयातामिति। अथापि खलु प्रत्यक्षे लैङ्गिके च सत्यपि सुखदुःखयोर्यत्कार्य्यं मुखप्रसादमुखमालिन्यलक्षणं तन्न दृश्यते। ज्ञानप्रभेदौ चेदेते यदेतत्तस्मिन् सति कार्य्यस्यादर्शनं तन्नोपपद्यते इति॥

**एकार्थसमवायिकारणान्तरेषु दृष्टत्वादेकदेश इति॥७॥**

एकस्मिन्नर्थे समवयन्ति यानि कारणान्तराणि तेषु सत्सु सुखदुःखयोर्दृष्टत्वान्नैते ज्ञानप्रभेदाविति। एकदेशे च दृष्टत्वान्न ज्ञानप्रभेदाविति। अन्यत्कारणं सुखस्य अन्यत् दुःखस्य अन्यत् प्रत्यक्षस्य अन्यत् लैङ्गिकस्य अन्यत् खल्वपि स्मृतेरिति। रागादिभ्यः सुखमुत्पद्यते द्वेषादिभ्योदुःखं इन्द्रियार्थसन्निकर्षात् प्रत्यक्षं अस्येदमिति ज्ञानात् लैङ्गिकं संस्कारात् स्मृतिरिति। अथापि खलु येन प्रदेशेन सुखं दुःखञ्चावच्छिद्यते, तस्मिन् प्रदेशे एकस्मिन्नर्थे समवायि यत्कारणान्तरं चन्दनकण्टकादिसम्भेदः, तत्र दृष्टत्वात् सुखदुःखयोरर्थान्तरभावइति। पादे वेदना सुखं शिरसीति प्रादेशिके सुखदुःखे, न त्वेवं ज्ञानमिति। तदेवं कारणभेदात् प्रकारभेदाच्च भेदइति। अनुकुलप्रतिकूलतया प्रत्यात्मवेदनीये चैते न शक्ये अपह्नोतुम्। न चैतन्निह्नुवानः क्वचिदभ्यनुज्ञां लब्धुमर्हतीति। यदिकारणभेदात् कार्य्यभेदः, लोहितरेतसोः कारणयोरविशेषादेकस्मिन् शरीरे अवयवभेदान प्राप्नोति, ततस्तोपलब्धिभेदोनोपपद्यते इत्यतआह,

**एकस्मिन् शिरः पृष्ठमुदरं मर्म्माणि तद्विशेषस्तद्विशेषेभ्यः॥८॥**

करिहस्तेन संबाधे प्रविश्यान्तर्विलोड़िते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥

सुरतारम्भगोष्ठ्यां स्वस्थियमुक्तिः ।

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्दीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्व्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥

अत्र दग्धशब्दोऽमङ्गलव्यञ्जकोऽपि सोत्प्रासोक्तौ गुणः। एवमन्यदप्यूहनीयम्। अविदग्धजनोचितत्वलक्षणं ग्राम्यत्वमपि शब्दार्थयोर्दोषमिच्छन्ति। तत्रोदाहरणम्। पदे यथा,

राकाविभावरीकान्त-संक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥

अत्र कटिशब्दः। कवयो हि श्रोणिनितम्बादिशब्दानेव प्रयुञ्जते। वाक्ये यथा,

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥

अत्र गल्लादयः शब्दाः। अर्थे त्वपि।

स्वपिति यावदयं निकटे जनः
स्वपिमि तावदहं किमपैति ते ।
तदपि साम्प्रतमाहर कूर्परं
त्वरितमूरुमुदञ्चय कुञ्चितम् ॥

अधमप्रकृत्युक्तौ तु नायं दोषः। यथा विदूषकस्योक्तौ,

फुल्लुकरं कलमकूरणिहं वहन्ति

जे सिन्धुवारविडवा मह वल्लहा दे ।
जे गालिदस्स महिसीदहिणो सरिच्छा-
दे किं च मुद्धविअइल्लपसूणपुञ्जा (१) ॥

अत्र, कलमकूरमहिसीदहिशब्दा ग्राम्याः । तत्र शब्दगतं ग्राम्यत्वमप्रयुक्तत्वान्नातिरिच्यते । अर्थगतञ्च पर्य्यायोक्तालङ्काराभावमात्रम् । न खल्वलङ्काराभावो दोषः ।

**रसस्थायिभावव्यभिचारिभावानां स्वशब्दनिर्देशः प्रतिकूलविभावादिग्रहः पुनः पुनर्दीप्तिरकाण्डे प्रथनविच्छेदावङ्गस्यातिविस्तृतिरनङ्गस्याभिधानमङ्गिनोऽननुसन्धानं प्रकृतिविपर्य्ययश्चेति रसदोषाः ॥ ५८ ॥**

क्रमेणोदाहरणम् ।

अजायत रसः कोऽपि भूपतेः सङ्गरान्तरे ।
परस्यानीकिनीं वीक्ष्य मुहुर्वीररसोज्ज्वलाम् ॥

अत्र रसस्य स्वशब्दनिर्देशः ।

संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥

---

(१) कुम्भोत्करं कलमभक्तनिभं वहन्ति
ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदधिनः सदृक्षा-
स्ते किञ्च मुग्धविचकिलप्रसूनपुञ्जाः ॥ इति सं० ।

अत्रोत्साहस्य ।

सव्रीडा दयितानने सकरुणा मातङ्गचर्म्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्व्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

अत्र व्यभिचारिभावस्य । व्यानम्रा दयितानने मुकुलिता मातङ्गचर्म्माम्बरे, सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि । मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे इत्यनुभाव-मुखेनामीषां प्रतिपादनन्तु न्याय्यम् । यत्र त्वनुभावमुखेन द्रागित्येव न प्रतीयते तत्र स्वशब्देनोक्तावपि न दोषः । यथा,

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे वाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥

अत्र व्रीडाद्यनुभावानां विवलितत्वादीनामिवौत्सुक्यानुभावस्य त्वरादेरसाधारणत्वाभावादुत्सुकमित्युक्तम् । प्रतिकूलविभावादि-ग्रहो यथा,

प्रसादे वर्त्तस्व प्रकटय मुदं सन्त्यज रुषं
प्रिये, शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निदानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे, प्रत्येतुं प्रभवति गतः कालहरिणः ॥

यथा वा,

> त्वजत मानमलं वत विग्रहै-
> र्न पुनरैति गतं चतुरं वयः ।
> परभृताभिरितीव निवेदिते
> स्मरमते रमते स्म वधूजनः ॥

अत्रानित्यताप्रकाशनं शृङ्गारप्रतिकूलस्य शान्तस्य विभावः ।
यथा वा,

> निभृतरमणे लोचनपथं पतिते गुरुजनमध्ये ।
> सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥

अत्र सकलपरिहारवनगमने शान्तानुभावौ । प्रतिकूल-विभावादीनामपि प्रकृतरसस्याङ्गभावोपपत्तौ त्वदोषः । यथाऽत्रैव इन्धनाद्यानयनव्याजेन सम्भोगार्थं वनगमनवर्णने दोषो न भवति । एवं विरुद्धयोरप्यङ्गाङ्गिभावे साम्ये वा विवक्षिते रसयोरविरोधो-बोद्धव्यः । यथा ।

> अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः ।
> नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र स्मर्य्यमाणः शृङ्गारः करुणमेव पुष्णाति ।

> क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
> गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
> आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
> कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

अत्र शराग्निविषयः कवेर्रतिभावस्त्रिपुरयुवतीनां करुणेन कामीवेति साम्यवशायातशृङ्गारपरिपुष्टेन प्रगुणीक्रियते। यथा खल्वार्द्रापराधः कामी समाचरति तथा शराग्निरिति साम्यं स्पष्टमेव। पुनःपुनर्दीप्तिर्यथा कुमारसम्भवे रतिविलापे। अकाण्डे प्रथनं यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरसंक्षये काले दुर्य्योधनस्य भानुमत्या सह शृङ्गारावतारणम्। अकाण्डे विच्छेदो यथा, वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोः संग्रामे देव्याः कङ्कणमोचनाय गच्छामीत्युक्त्वा राघवस्यान्तःपुरगमनम्। अङ्गस्यातिविस्तृतिर्यथा हयग्रीववधेऽप्रधानस्य हयग्रीवस्यातिविस्तरेण वर्णनम्। यथा वा किरातार्ज्जुनीये सुराङ्गनाविहारादेः। अनङ्गस्याभिधानं यथा कर्पूरमञ्जर्य्यामात्मना नायिकया च कृतं वसन्तवर्णनमनादृत्य वन्दिकृतस्य तस्य राज्ञा प्रशंसनम्। तद्धि न प्रकृतस्य रसस्योपकरोति। अङ्गिनोऽननुसन्धानं यथा, रत्नावल्यां चतुर्थेऽङ्के वाभ्रव्याऽऽगमने सागरिकाया विस्मरणम्। प्रकृतयो-नायकादयः, तेषां विपर्य्ययोऽन्यथावर्णनम्। यो यथाभूतो-भवितुमुचितस्तस्यायथावर्णनमिति यावत्। यथा धीरोदात्तस्य रामस्य छद्मना वालिवधवर्णनमित्येवमादिकमनुसन्धेयम्।

## अनौचित्यं सर्व्वत्र ॥ ५८

अनौचित्यं नाम दोषः सर्व्वत्र शब्देऽर्थे रसे च भवति। क्रमेणोदाहरणम्।

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या।

प्रयान्ति तामाशु गतिं यशस्विनो-
रणाश्वमेधे पशुतामुपागताः ॥

अत्र पशुशब्दः कातरतामभिव्यनक्तीत्यनुचितस्तदुपनिबन्धनम्।

राज्यं नाम नरेन्द्राणामापदां पदमुत्तमम्।
तदमित्राय दत्त्वा तद्विपदा भव निर्वृतः ॥

अमित्रस्य सम्पदा लभ्यमानं तेनोपप्लुतं च राजानं प्रत्यनुचितमेवेदमुपदिष्टम्।

मानापनोदाय पदारविन्दे
नतः प्रियायाः प्रणयी तया तु।
पादप्रहारेण तिरस्कृतोऽभू-
दालोहिताक्षोगत एव वेगात् ॥

अत्र नायिकापादप्रहारेण नायककोपवर्णनमनुचितम्। एवमन्यदप्यूहनीयम्। अनौचित्यमेक एव दोषः सर्वानपरानभिव्याप्नोति। न खलु प्रतिकूलवर्णादयः केऽपि भवन्त्युचिताः। तस्मादनौचित्यस्यैवोदाहरणप्रपञ्चेनोपन्यासार्थमन्येषां परिकीर्तनमिति युक्तमुत्पश्यामः। ध्वनिकृद्भिरप्युक्तम्।

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥

इति।

**एतेनालङ्कारदोषा व्याख्याताः ॥६०**

अलङ्कारदोषा अप्येतेनैव व्याख्याता वेदितव्याः न त्वेते पृथ-

गुपनिबद्धव्या भवन्ति । तथाहि । वैफल्यं वृत्तिविरोधः प्रसिद्ध्य-
भावश्चेति त्रयोऽनुप्रासदोषाः प्राच्यानामनुमताः ।

क्रमेणोदाहरणम् ।

> भगाङ्गभग्निभुग्भाग्भर्गभूषितविग्रहः ।
> जामाता गिरिराजस्य जगद्रक्षतु धूर्जटिः ॥

तदिदमधिकपदत्वं परिकराभावो वा ।

> अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
> कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर ॥

तदिदं प्रतिकूलवर्णत्वम् ।

> चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्ज्जटिर्धूर्ध्वजान्ता-
> नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूवराग्रं कुबेरः ।
> रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
> स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥

अत्र कर्त्तृकर्म्मप्रतिनियमेन स्तुतिर्न खल्वपि पुराणादौ प्रसिद्धा,
किन्त्वनुप्रासानुरोधेनैव कृतेति प्रसिद्ध्यभावः । सोऽयं प्रसिद्धि-
विरोधेऽन्तर्भवतीति केचित् । अविचारिताभिधानमेतदिति प्रति-
भाति । अभावविरोधयोरर्थान्तरत्वात् । एवं रीत्या विरोधे त्वभि-
प्रेयमाणे किल कविकल्पना दत्ततिलाञ्जलिरापद्येत । अनौचित्यन्तु
स्यात् । स एव तु दोषः सर्व्वव्यापी । व्युत्पत्त्यर्थन्तु क्वचित्
कस्यचित् प्रदर्शनमनुचिन्तनीयम् । पादत्रयगतत्वं यमकदोषः ।
स त्वप्रयुक्तत्वान्नातिरिच्यते । उपमानस्य जातिप्रमाणगतं धर्म्मगतञ्च

न्यूनत्वमधिकत्वं वा उपमानोपमेययोर्लिङ्गवचनभेदः कालपुरुष-विध्यादिभेदोऽसादृश्यमसम्भवश्चेत्युपमादोषाः परेषामनुमताः । यदाहुः ।

हीनाधिकत्वं वचन-लिङ्ग-भेदो विपर्य्ययः ।
असादृश्यासम्भवौ च दोषाः सप्तोपमागताः ॥

विपर्य्ययः कालपुरुषविध्यादिभेदः ।

क्रमेणोदाहरणम् ।

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ।

अत्रोपमानस्य जातिगतं न्यूनत्वमुपमेयस्य निन्दां व्यञ्जयदनौचित्ये पर्य्यवस्यति ।

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ।

अत्राप्युपमेयस्य परिमाणगतं न्यूनत्वमुपमेयं कदर्थयतीत्यनौचित्यमेव दोषः ।

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥

अत्रोपमानस्य जातिगतमाधिक्यम् । तदिदमनौचित्यम् ।

पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥

अत्रोपमानस्य प्रमाणगतमाधिक्यम् । दोषस्त्वनौचित्यमेव ।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूत-भागाश्लिष्ट इवांशुमान् ॥

अत्र मौक्तीस्थानीयस्तडिल्लतालक्षणो धर्म्म उपमानस्य वक्तव्योऽपि नोक्त इति न्यूनपदत्वम्।

स पीतवासाः प्रगृहीतशार्ङ्गो-
मनोज्ञभीमं वपुराप कृष्णः।
शतह्रदेन्द्रायुधवान् निशायां
संसृज्यमानः शशिनेव मेघः॥

अत्रोपमेये शङ्खस्यानिर्देशात् उपमानस्य शशिरूपो धर्म्मोऽधिको निर्दिष्टः। तदिदमधिकपदत्वम्।

चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे।

अत्र च्युतोऽसीति न खल्वप्युपमाने चिन्तारत्नेऽन्वेतुमर्हति। तदिदं भग्नप्रक्रमत्वम्।

सक्तवो भक्षिताः कामं शुद्धाः कुलवधूरिव।

स एवात्रापि दोषः। यत्र पुनर्लिङ्गवचनभेदेऽपि सामान्यस्योभयत्रान्वयो न व्याहन्यते, तत्र तु दोषो न भवत्येव। तत्रोदाहरणम्।

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः।

एवं,

तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव॥

अत्र मधुरताभृत इति दधते स्म इति चैकवचनबहुवचनयोः समानरूपत्वान्नास्ति दोषस्यावसरः। भोजराजादयस्तु पर्य्यायान्तराभावे लिङ्गवचनभेदयोर्न दोषत्वमित्याहुः। उदाहरन्ति च।

यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥

अत्र भस्त्रायास्तथाविधं पर्य्यायान्तरं नास्तीति । आचार्य्यास्तु,

न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ।
स्त्रीव गच्छति षण्ढोऽयं वक्त्येषा स्त्री पुमानिव ।
प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता ।
भवानिव महीपाल, देवराजो विराजते ।
अलमंशुमतः कक्षामारोढुं तेजसा नृपः ॥

इत्येवमादौ सौभाग्यं न जहात्येव जातुचित् । इत्याहुः ।

कालभेदो यथा ।

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात् प्रसादमिव चेतना ॥

अत्र चेतना अधुनाऽपि प्रसादमाप्नोति, न त्वापेत्यनेन संबन्धु-मर्हतीत्यनौचित्यम् ।

प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥

अत्र लता विभ्राजते, त्वन्तु विभ्राजसे इति पुरुषभेदः ।
अनुचितः ।

